पन्नत्वात्, तथा पौर्वापर्यसंबन्धे क्रियमाणे प्रमाणाभावाच्च आनन्तर्यार्थो न घटते। मङ्गलार्थोऽप्याचार्यैरविघ्नतो ग्रन्थपरिसमाप्तये व्याख्यातो ग्रन्थारम्भे। इदं तु ब्राह्मणं वेदान्तर्भूतत्वादन्यस्यापि स्वयमेव मङ्गलकृत्। तेन मङ्गलार्थमपि व्याख्यातुं कथं शक्यते?

5 अथ च प्रथमपदस्यानर्थक्ये क्रियमाणे वेदस्य महद् दूषणं जायते। अतः संसिद्धस्यैव ग्रन्थस्याध्यापकाध्येतॄणां मङ्गलार्थे व्याख्यायमाने सार्थको भवत्यथशब्दः। किंच। अन्येषां गोभिल-लाट्यायन-कात्यायन-प्रभृतीनां नूतनशास्त्रकर्तॄणाम् आचार्याणां शिक्षापणा(!)र्थम्। समूलत्वप्रदर्शनार्थं च। तथा अन्यवेदग्रन्थारम्भेऽपि दृष्टोऽथशब्दः। तद्यथा — **अथ खल्वयमार्ष-**
10 **प्रदेशो भवति।** (आ. ब्रा. १.१) इति। अर्थान्तरम[प्य]स्ति तदुच्यते। ब्राह्मणं तु तावद्वेदविषयविधिज्ञानां सर्वत्र फलातिशयं प्रदर्शयति। तत् कथम्? यज्ञविषये सर्वत्र पूर्वं तावत् सामप्रयोगफलविशेषं प्रतिपाद्य तत उक्तविधिविदोऽपि सर्वत्र समानं फलं वदति। तद्यथा ज्योतिष्टोमाधिकारे — **तद्देवा यशो व्यभजन्त तस्याग्नी रौरवं प्रावृहत। तद्वै स पशुवीर्यं**
15 **प्रावृहत। पशवो वै रौरवम्॥ पशुमान् भवति। य एवं वेद॥** (तां. ब्रा. ७.५.७-९) इति। तथा — **अथेन्द्रो यौधाजयं प्रावृहत। तद्वै स वज्रं प्रावृहत। वज्रो वै यौधाजयम्॥ वज्रं भ्रातृव्याय प्रहरति। य एवं वेद॥** (तां. ब्रा. ७.५.१२-१३)। एवमन्यविषयेऽप्यर्थवादो दृश्यते। तथा — **मृत्युं तरति पाप्मानं तरति ब्रह्महत्यां योऽश्व-**
20 **मेधेन यजते। यश्चैनमेवं वेद॥** (श. ब्रा. ३.२.६.१) इत्यादिभिर्वाक्यैः उक्तविधिज्ञानमपि स्वर्गलक्षणं फलं प्रदर्शितम्। एवमिहापि पठ्यमानोऽथशब्द एतद्ग्रन्थोक्तविधिज्ञानां तद्वत् फलं प्रदर्शयति। तदुच्यते। रहस्योपनिषदि देवतात्वेन स्तोभवर्णने **अयं वाव लोको हाउकारः** (छा. उ. १.१३.१) इत्यस्मिन्नधिकरणे अथशब्देन चन्द्रमा उक्तः। तेन एतच्छास्त्रपठितविधिज्ञानामपि ग्रन्थारम्भे
25 पठितश्चन्द्रलक्षणोऽथशब्दश्चान्द्रमसफलं ददाति। तत् किं चान्द्रमसं फलम्?

---

2. P. रम्भः for रम्भे°.
5. B. अथवा for अथ च.
7. R. om. कात्यायन.
21. BP. विपद्यमानो, R. विद्यमानो° for पठ्यमानो.

तापत्रयोपशमनम् । अज्ञानलक्षणतमोनाशश्च । ग्रन्थगौरवभयाद् अयमर्थस्त्वनेनैव वाक्येन समाप्यते । इह तावदेतच्छास्त्रारम्भस्य प्रयोजनं वक्तव्यम् । तत्प्रयोजनेनोक्तेनैव **अतः**-शब्दोऽपि व्याख्यातो भविष्यति ॥

इह हि **छान्दोग्ये** परमनिःश्रेयसप्रापकज्योतिष्टोमादियज्ञविधायकान्यष्टौ ब्राह्मणानि सन्ति । तत्र **ताण्ड्यब्राह्मणे** सप्त संस्थाः ससोमकाः एकाहाहीनाहर्गण- 5
सत्रसत्रायणभेदाः सहस्रसंवत्सरपर्यन्तनानारूपा यज्ञाः प्रदर्शिताः । तत्र त्रिसंस्थ-
ज्योतिष्टोमद्वादशाहौ सकलस्तोत्रस्तोमविधिविधानसहितौ पठितौ ॥

अथ एतद्ब्राह्मणानुक्तविधियज्ञविशेषाः **षड्विंशब्राह्मणे** प्रदर्शिताः । तद्यथा — सुब्रह्मण्याविधानम् । ज्योतिष्टोमोक्तसामच्छन्दोविधानम् । तत्रैव प्रतिस्तोत्रं न्यूनाक्षरफलप्रदर्शनम् । विश्वरूपाज्योतिर्गानविधिः । ब्रह्मवरणविचारः । 10
ऋग्वेदादिभ्रेषोल्वणप्रायश्चित्तानि । सौम्यचरुफलम् । धूर्गानम् । महर्त्विक्प्रदर्शनम् । सवनीयचमसयाजमानम् । ऋत्विगन्यून[त]ातिरिक्त[त्व]ाभिचारचरण-
दोषशमनप्रायश्चित्ताचरणम् । दैवमानुषर्त्विग्वरणम् । देवयजनप्रार्थना । देवयजन-
प्रदेशप्रमाणं च । अवभृथविधिः । अभिचारयज्ञविष्टुतयः । द्वादशाहपरिशेषविधि-
विधानम् । श्येनेषुसंदंशवज्रवैश्वदेवसत्रकल्पः । अग्निहोत्रोत्पत्तिः । उत्पूतानुत्पूत- 15
स्कन्नप्रायश्चित्तम् । निर्मथ्याग्नावजायमाने कालातिक्रमभयात् गौणत्वेन लौकिकाग्नि-
ब्राह्मणहस्ताजाकर्णकुशस्तम्बेषु होमकल्पः । अग्निहोत्रहोमविधिप्रदर्शनम् । औदुम्बरी- 17

2. V. समाप्यताम् for समाप्यते; B. तत्र योजनो° for तत्प्रयोजनेनो°.

3. B. om. अपि.

4. B. °निःश्रेयसः प्रा°; V. निःश्रेयः सप्रा° for निःश्रेयसप्रा°.

6. V. °रूपयज्ञाः for °रूपा यज्ञाः; BP. संस्था for °संस्थ.

8. R. om. °यज्ञ.

9. BP. °ह्मण्य for °ह्मण्या.

10. P. स्तोत्र° for स्तोत्रं; B. विश्वा रूपा; P. विश्वरूप for विश्वरूपा; BVP. °पदार्थ[:] for °वरणविचारः.

11. BVP. om. ऋग्वेदादिभ्रेषोल्वण°.

12, R. न्यूनातिरेकयज्ञविभ्रेषप्रायश्चित्तं for न्यूनता ... चरणम्.

13. P. वर्णनम् for °वरणम्.

16. निर्मथ्याग्ना° *see* CN.

17. V. °जातकर्ण° for °जाकर्ण *see* CN; V. °होत्रे होत्रहोम for °होत्रहोम.

यूपसंस्कारफलवाद: । ततो यज्ञशेषविधिं समाप्य संध्योपासनविधि: । चन्द्रक्षय-
वृद्धि: । दर्शपौर्णमासकालप्रदर्शनम् । स्वाहास्वधावषट्कारलक्षणपरमबीजानां
रूपफलविधानम् । अद्भुतप्रायश्चित्तानि च ॥

अथ **सामविधौ** सामस्वरूपवर्णनम् । सामशब्दनिर्वचनम् । क्रुष्टादि-
5 सप्तस्वरविशेषप्रयोजनेन ब्रह्मादिस्तम्बपर्यन्तजगत्तर्पणम् । स्वरदेवतावर्णनम् ।
कृच्छ्रातिकृच्छ्रकृच्छ्रातिकृच्छ्रविधि: । ब्रह्मयज्ञविधानम् । ब्रह्मयज्ञस्य हविर्यज्ञक-
पाशुकसौमिकयज्ञसमानफलप्रदर्शनम् । सकलपातकप्रायश्चित्तानि । मनुष्यगवाश्वा
नामुपद्रवोत्पत्तिशान्ति: । काम्यफलोपसंवाद: (०हार: ?) ॥

अथ **आर्षेये** — सकलयज्ञपठितस्तोत्रविशिष्टसाम्नां संज्ञाविशेष: ऋषि-
10 प्रदर्शनं च ॥

अथ **देवताध्याये** — सकलयज्ञस्तोत्रस्वरूपसाम्नां निधनविशेषदेवता-
निरूपणम् । छन्दोरूपदेवतावर्णननिर्वचनानि ॥

अथ **वंशाख्ये ब्राह्मणे** — सकलपठितर्क्साम्नाम् ऋषिवंशकथनम् ॥

अथास्याधिकृतस्य ब्राह्मणस्य प्रयोजनमुच्यते । सर्वेषु यज्ञेषु स्तोत्र-
15 शस्त्राणां प्राधान्यम् । तत्र शस्त्राण्यपि स्तोत्राधीनानि । अथ अन्येषु ब्राह्मणेषु
सकलयज्ञविधानमुक्तम् । तथापि प्राधान्येन वर्तमानस्तोत्ररूपसामगानविचार-
ह्रस्वदीर्घप्लुतभेदकम्पोत्स्वरिताभिगीतप्रणतविनतप्रकृत्यायिभावसंधिवत्पदवत्संक्रुष्टवि-
18 क्रुष्टस्तोभविचारोच्चनीचवृद्धावृद्धक्रुष्टाक्रुष्टसंशयप्राप्तविधिप्रदर्शनरथन्तरसामाख्यवि-

1. P. °विधि: समाप्यसं° for विधिं समाप्य °.

2. R. °लक्षणानि and om. °परमबीजानां रूपफलविधानम्.

5. B. °युञ्जने; P. °योजने for °योजनेन.

6. BPR. om. कृच्छ्रातिकृच्छ्र°; R. सामजपविधि:, तस्य for ब्रह्मयज्ञ-विधानम् । ब्रह्मयज्ञस्य; P. यज्ञक (–) सौ°.

7. B. °यामुमा°; V. पाशुमत् for °पाशुक°; R. om. °पाशुक°.

12. R. छन्दसामुत्पत्तिवर्णदेवतानिरूपणानि for छन्दो ... .

14. R. om. अस्य; R. trans. parah. अथाधिकृतस्य ... प्रवृत्तम् ॥ after यज्ञार्थे प्रवृत्ता (p. 12. l. 2).

15. P. °धीतानि for °धीनानि.

17. PB. °कृत्या इति° for कृत्यायि°.

शेषवर्णनप्रस्तावादिभक्तिदर्शनमध्यनिधनोद्गहलक्षणवेदाध्ययनफलशिष्यपात्रापात्रनि-रूपणगुरुभक्तिदक्षिणाविधानमत्रैवोक्तम् । अत एतच्छास्त्रमन्तरेणैतद्विज्ञानं न संभवति । एतस्माद्वा बह्वर्थकरणात् अथ-शब्दानन्तरम् अतःशब्दो हेत्वर्थः पठितः । किंच । यद्यपि पुष्पाचार्य[दयः] मात्रालक्षणशिक्षादिपरिशिष्टकर्तारः स्वरोत्पत्तिस्वरव्यञ्जनोच्चारणह्रस्वदीर्घप्लुतकम्पोत्स्वरितकर्षणादिप्रकृतिविकृतिविचार-स्तोभगतागतोच्चनीचादिविचारेष्वशेषतः प्रवृत्ताः तेऽपि वेदमूलाधारावलम्बनमन्त-रेण कथं वक्तुं क्षमाः? एवंविधबहुप्रयोजने एतच्छास्त्रं प्रवृत्तम् ॥

अथ क्रमप्राप्तं रहस्योपनिषत्प्रयोजनमपीहैव वक्तव्यम् । तत्राप्युपासना-काण्डे प्रथमाध्याये उद्गीथोत्पत्त्युद्गीथविचारोद्गीथाक्षरप्रशंसनसामोपधावनसाम-शब्दनिर्वचनचक्षुरादित्यस्थितयज्ञाधीशस्वरूपवर्णनसामप्रतिष्ठापनप्रस्तावोद्गीथप्रतिहा-रदेवताप्रदर्शनान्नोपह्वानस्तोभदेवताप्रदर्शनाद्यैर्वचनैर्यज्ञविधानमेवोक्तम् । द्वितीया-ध्याये सकलपदार्थसर्वब्रह्माण्डव्याप्तपञ्चविधसप्तविधस्तोत्ररूपगायत्ररथन्तरबृहदाद्यु-पासनप्रसङ्गेन यज्ञविधानमेवोक्तम् । ततो वासवरु(रौ?)द्रादित्यवैश्वदेवानां साम्नां गायत्रगीत्या[स-]होमकं गानमुक्तं च । अन्येष्वप्यध्यायेषु यज्ञबीजानि प्रदर्शि-तानि । तद्यथा – पुरुषो वाव यज्ञः (छां. उ. ३. १६. १) इत्यादि । तथा उत्तराध्याये – अथ हैनं गार्हपत्योऽनुशशास (छां. उ. ४. ११. १) इति । एष ह वै यज्ञो योऽयं पवते (छां. उ. ४. १६. १) इत्यत्र साक्षाद्ब्रह्मत्वं निर्णीतम् । प्रजापतिर्लोकानभ्यतपद् (छां. उ. ४. १७. १) इति विभ्रष्ट-यज्ञप्रायश्चित्तम् । तथा अभीष्टयज्ञसमर्पणाय परमात्मस्वरूपविवरणम् । आहिंसन्-

1. PR. °नोद्ग° for °नोद्गह°; PR. om. पात्रा°.
2. BV. °ज्ञानं for °विज्ञानं.
3. BV. कथं क (°का V.) रणात् कारणात् for बह्वर्थकरणात्.
5. B. °च्चारणा, P. °च्चारणाद् for °च्चारण.
6. R. विचारे विशेषतः for विचारेष्वशेषतः.
8. R. अथ रहस्योपनिषद्यपि for अथ … तत्रापि; P. °प्राप्त° for °प्राप्तं.
9. BP. उद्गीथो(थम् P.) तदुद्गीथ, for उद्गीथोत्पत्ति°; R. om. उद्गीथविचार.
10. PR. om. °चक्षुरादित्य … प्रतिष्ठापन°.
11. P. °दर्शनान्तो° for °दर्शनान्नो°; R. om. °दर्शनान्नोपाह्वान.

**त्सर्वभूतान्यन्यत्र तीर्थेभ्यः** (छां. उ. ८. १५. १) इत्यादिबहुकथनैः **रहस्योपनिषदपि यज्ञार्थे प्रवृत्ता । प्रासङ्गिकमिदमुक्त्वा प्रकृतमनुसरामः ॥**

इह अथशब्द-अतःशब्दौ व्याख्यातौ । अतः परं **संहितोपनिषदो व्याख्यास्यामः** इत्येतद्वाक्यं व्याख्येयम् । अत्र **संहिता**शब्देनार्चिकग्रन्था उच्यन्ते । अध्यापकाध्येतॄणां सम्यक् हितकर्यः संहिताः । अथवा संततप्रकारेण द्विपदावसानेनैव अधीयानाः संहिताः । अथवा उपवीतानन्तरं शरीरावसानपर्यन्तं संततमधीयन्त इति संहिताः । संहितानां परमरहस्यविचार उपनिषत् । **उपनिषद** इत्यत्र बहुवचनं बह्वर्थफलवाक्यप्रदर्शनपरम् । **व्याख्यास्याम** इति क्रियापदम् । संहितानामार्चिकसमुदायपठितानाम् ऋचाम् **उपनिषत्(दः?)** परमरहस्यानि परमविचारान् **व्याख्यास्यामः** कथयिष्याम इति समुदायार्थः ॥ १ ॥

## वेदार्थप्रकाशः

**सा —** वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥

यस्य निःश्वसितं वेदा ये वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥ २ ॥

तत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ।
आदिशत्सायणाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥

---

2. BP. यज्ञार्थे for यज्ञार्थं; B. प्रवृत्तं for प्रवृत्ता; P. प्रवृत्तम् for प्रकृतम्; R. om. प्रासङ्गिक ... °मरामः.

4. PR. om. वाक्यं.

5. PR. °कारी संहिता for °कर्यः संहिताः.

6. R. °नयन° for °वीत°.

7. V. °विधानः for °विचारः; B. °पदर्थस्य तु for °षद इति.

8. BPR. बह्वाचार्यं for बह्वर्थ°.

9. B. °पत्सु for °षदः.

12. MR. has lost from वागीशाद्याः upto उपास्यत्वम् p. 13. l. 18.

[ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुः सायणाचार्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥]

व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता ।
व्याख्याता ब्राह्मणस्याथ व्याख्यानं संप्रवर्तते ॥ ५ ॥

तत्राष्टानां ब्राह्मणानामन्यतमस्य संहितोपनिषदाख्यस्य व्याख्यानं क्रियते । नन्वसौ संहिता ? कतमा यत (कतयमेम् ?) उपनिषद् यद्विषयमिदं ब्राह्मणं पवर्तते । [इति चेत् । उ] च्यते । वेदान्तरसंहितावत् पदानामत्यन्तसंश्लेषेण उच्चारणं संहितेत्युच्यते । तथा पाणिनिरपि वर्णानामत्यन्तसंनिकर्षः संहितेति स्मरति । **परः संनिकर्षः संहिता** (पा. १.४.१०९) इति । सामवेदस्य "**गीतिषु सामाख्या**" (मी. सू. २.१.३६) इति न्यायेन केवलगानात्मकत्वात् पदाभावेन प्रसिद्धा संहिता यद्यपि न भवति तथापि तस्मिन् साम्नो सप्त स्वरा भवन्ति । **क्रुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिस्वार्या** इति । य(त ?)था **मन्द्र [मध्यम] ताराणीति** त्रीणि वाचः स्थानानि भवन्ति । एतेषां यः संनिकर्षः सा संहिता । उपनिषच्छब्दो रहस्यवाची । यथा उपनिषत्प्रतिपाद्य (–) ज्ञानत्वात् उपनिषदुच्यते ॥

यद्वा तद्वदुपास्यत्वा [त्] (–) [उपनिषद्] भिधेयता । तद्वै खलु समृद्धमेव ध्यायन्नासीतेत्युपास्यचोदनाया दर्शनादुपास्यत्वम् । एवं च यथा ब्रह्मविद्यायां मुख्य उपनिषच्छब्दः तत्प्रतिपादकब्राह्मणे वर्तते एवं संहितोपनिषच्छब्दोऽपि इति कृत्वा अध्यापकैः **संहितोपनिषदि**तीदं ब्राह्मणं व्यपदिश्यते ॥

तत्र तावच्छ्रोतुर्बुद्धिसमाधानाय वर्तिष्यमाणमर्थं संगृह्य प्रतिजानीते – **अथातः** इति । **अथ**शब्द आनन्तर्यार्थः । **अतः**शब्दो हेत्वर्थः । यस्मादेतद्-

---

4. T. om. rest of the introductry verses.
12. मन्द्र°. *see* CN.
14. T. °पाद्य. hereaftei the Ms. is broken upto ज्ञानत्वात्.
15. T. °स्यत्वा is broken up.o भिधेयता.
16. MR. begin from एवं च; T. यद्वा for यथा; M. om. यथा.
17. M. °ब्राह्मणैव for °ब्राह्मणे.
18. MR. अप्यतिदिश्यते for व्यपदिश्यते.
19. M. °च्छ्रोतृबु° for °च्छ्रोतुर्बु°.

व्याख्यानमन्तरेण वक्ष्यमाणानि फलानि वर्जनीयावर्जनीयाः स्वरभेदाश्च न ज्ञायन्ते अतः अस्माद्धेतोरित्यर्थः । उपपूर्वात् षदेः गत्यर्थाद् विशरणार्थाद्वा उपनिषच्छब्दः । उपागतस्य प्राप्तस्य अध्येतुर्नितरामज्ञानं शृणाति हिनस्तीति नियमेन गन्तव्या प्राप्तव्येति वा एतच्छब्दस्य व्युत्पत्तिः । पूर्वोक्तस्वरादिसंहिताया **उपनिषदः** विद्यारहस्यानि **व्याख्यास्यामः** विस्तरेण आसमन्तात् स्पष्टमुपदेक्ष्यामः इति वाक्यार्थः ॥ १ ॥

## सर्वपरोक्षा देवसꣳहिता भवति ॥ २ ॥

**द्विज – सर्वपरोक्षे**ति । सर्वेभ्यो जनेभ्यः परोक्षं रहसि एकान्ते अधीयत इति **सर्वपरोक्षा** । अथवा सर्वस्याः संहितायाः परोक्षं पारलौकिकं फलमुद्दिश्य अधीयत इति **सर्वपरोक्षा** । सा **सर्वपरोक्षा** अधीता **देवसंहिता भवति** । देवस्य जगत्स्रष्टुः परमतुष्टिकरी भवति । अतस्तत्फलप्रदायिनी भवतीत्ययमाशयः ॥ २ ॥

**सा** – अथाध्ययनसमये वेदितव्यास्तिस्रः संहिता लक्षयति – **सर्वपरोक्षे**ति । या संहिता **सर्वपरोक्षा** सर्वैः समीपस्थैः दूरस्थैश्चाश्रूयमाणत्वात् परोक्षा, अक्षाणामिन्द्रियाणां परस्तात् वर्तमाना उपांशु प्रयुज्यमानेत्यर्थः । सा **देवसंहिता** देवानां संबन्धिनी संहिता **भवति** । **त्रिरुपांश्वाह देवेभ्य एवैनं प्राह**

---

1. MR. °माणफलानि for °माणानि फलानि; R. (अ)वर्जनीयभेदाश्च for (अ)वर्जनीयाः स्वरभेदाश्च; M. नाज्ञायते for न ज्ञायन्ते.

2. M. षिदेः for षदेः; R. विदारणार्थाच्च for विशरणार्थाद्वा

3. R. om. अध्येतुः; R. अर्थं ज्ञातं for अज्ञानं.

4. T. तच्° for एतच्°.

5. T. °निषद् for °निषदः; L. विद्याः ..., M. विद्यासरहस्यानि R. विद्याः सरहस्याः for विद्या°... ; T. °मुप – broken.

11. V. °पद° for °फल°.

14. MR. om. या संहिता; MR. om. दूरस्थैश्°.

15. MR. अक्ष्णाम् for अक्षाणाम्; M. पुरस्तात् for पर°; T. उपा-माने° broken.

16. MR. add इति after भवति; MR. om. त्रिर्.

(तै. स. ६. १. ४. ३) इति तैत्तिरीयके उपांशुत्वलक्षणस्य धर्मस्य देवसंबन्ध-दर्शनात् । यद्वा **परोक्षप्रिया इव हि देवाः** (बृ. आ. उ. ४. २. २) इति पारोक्ष्यं देवानां प्रियकरमिति परोक्षायाः संहितायाः देवसंबन्धः ॥ २ ॥

## सर्वप्रत्यक्षासुरसꣳहिता भवति ॥ ३ ॥

**द्विज – सर्वप्रत्यक्षेति** । सर्वेषां सज्जनानां दुर्जनानां च शूद्रादीनां च वर्णानां तत्समक्षमधीयत इति **सर्वप्रत्यक्षा** । अथवा सर्वस्याः संहितायाः ग्राम्यं प्रत्यक्षमाधुनिकमशनद्रव्यादिकमुद्दिश्य अधीयत इति **सर्वप्रत्यक्षा** । सा सर्व-प्रत्यक्षा अधीता **असुरसंहिता** भवति । असुरास्तु तावद् देहावसानपर्यन्तं स्वाध्यायतपश्चरणादिभिरैहिकं ग्राम्यं प्रत्यक्षमेवेहन्ते । अतो ग्राम्यप्रत्यक्षफलेप्सवो वेदविक्रेतारो दुर्जननीचवर्णश्र[ा]वणकर्तारो ब्राह्मणा अपि असुरसमानाः प्रदर्शिताः । जीवन्तोऽप्यसुरसमानाः । तर्हि ऊर्ध्वं किं वक्तव्यम्?

**सा – सर्वप्रत्यक्षेति** । अथ या संहिता **सर्वप्रत्यक्षा** समीपवर्तिनां दूरवर्तिनां च इन्द्रियपथे वर्तमाना सर्वैरपि श्रूयमाणा । शिरोगतेन स्वरेण प्रयुक्तेत्यर्थः । सा असुरसंबन्धिनी संहिता भवति ॥ ३ ॥

## परोक्षप्रत्यक्षर्षिसꣳहिता भवति ॥ ४ ॥

**द्विज – परोक्षेति** । या संहिता कुत्रचित् परोक्षा अधीयते कुत्रचित्

---

1. M. तैत्तिरीयकैः for तैत्तिरीयके; R. उपांशु°, M. उपांशूक्त° for उपांशुत्व°.

2. BPVM. om. इव.

3. M. प्रियकम्, R. प्रियम् for प्रियकरम्.

7. BP. अशनमित्यादिकम्, R. अशनादिकम् for अशनद्रव्यादिकम्.

8. BV. °पर्यन्त° for पर्यन्तं.

9. B. ईहन्ति, V. ईक्षन्ति for इहन्ते.

12. R. om. सायणभाष्य on सर्वप्रत्यक्षा°.

13. M. दूरवासिनां for दूरवर्तिनाम्; M. वृत्तौ for °पथे; M. असुरेण for स्वरेण.

14. M. om. भवति.

16. BP. अधीयन्ते for अधीयते°.

प्रत्यक्षा । एतस्याः विषय उच्यते । परोक्षे रहसि परमार्थेऽप्यधीयाना संहिता कदाचिदवसरप्राप्तौ स्वधर्मनिरतानां ब्राह्मणानां यज्ञादिसिद्धये तारं तार्तीयसवनम् (पा. शि. ८.) इत्येतदादिवाक्यैरुच्चैरधीयत इति एतद्विषये परोक्षप्रत्यक्षा भवति । सा एवंविधा परोक्षप्रत्यक्षा ऋषिसंहिता भवति । ऋषीणां गौतम-
5 भारद्वाजादीनाम् अध्ययनसमाना भवति । तत् कथम्? ऋषयस्तु सर्वदा अरण्ये निर्जने एकान्ते सविचारान् वेदान् पठन्ति । तेऽपि स्वधर्मनिरतानां हितार्थं तैरेव मन्त्रैरुक्तविधिना यज्ञसिद्धिं कुर्वन्ति । अत ऋष्यध्ययनसमाना भवति । अथवा ऋषीणां सम्यक् हितकरी ऋषिसंहिता भवति । तत् कथं हितकरी? उच्यते । या या ऋक् उक्तपरोक्षप्रत्यक्षप्रकारेण अधीयते, यस्यां
10 यस्याम् ऋचि यो य ऋषिस्तस्य तस्यर्षेः परमतुष्टिर्जायते । तेन ऋषिसंहिता भवति । अतस्तत्प्रोक्ता अपि [संहिता] ऋषि(षे?) रेव ज्ञेय(-या?) इत्ययमाशयः ॥ ४ ॥

सा – परोक्षेति । या तु परोक्षप्रत्यक्षा उक्तरूपद्वयोपेता मध्यमस्वरेण प्रयुक्ता सा ऋषिसंहिता । ऋषयो मन्त्रदर्शिनो जैमिनिप्रभृतयः । तत्संबन्धिनी
15 संहिता भवति ॥ ४ ॥

**यथाधीमहे ॥ ५ ॥**

द्विज – यथेति । यथा स्वधर्मनिरता वयम् अधीमहे । शास्त्रमास्तं कदाचित्परोक्षं कदाचित्प्रत्यक्षमध्ययनं कुर्म इति ॥ ५ ॥

सा – अथ उक्ते संहितात्रैविध्येऽध्ययनं प्रमाणयति – यथेति । यथा
20 येन प्रकारेण उपांशूच्चादिना वयमध्येतारः सामान्यधीमहे तथा खल्वेताः पूर्वोक्ताः तिस्रः संहिता इत्यर्थः ॥ ५ ॥

**स्वर्ग्या देवसꣳहिता भवति । स्वर्गं लोकं गच्छति**
23 **यस्तथाधीते ॥ ६ ॥**

---

1. BP. प्रत्यक्षम् for प्रत्यक्षा.
13. R. om. सायण भाष्य on परोक्ष°.
14. T. प्रयोज्या for प्रयुक्ता.
19. R. om. सायणभाष्य on यथा धीमहे°; M. उक्त° for उक्ते.
20. M. (ए)तद्वेतोः for (ए)ताः.

**द्विज** – एवंविधास्तिस्रः संहिता उद्भाव्य अथ तासां फलं प्रदर्शयति — **स्वर्ग्येति** । या पूर्वोक्ता सर्वपरोक्षा **देवसंहिता** सा अध्येतुः **स्वर्ग्या** स्वर्गलोक्योग्या **भवति** । **यो** ब्राह्मणः **तथा** तेन प्रकारेण **अधीते** स **स्वर्गं** [**लोकं गच्छति** ।] ब्रह्मलोकं गच्छतीत्यर्थः ॥ ६ ॥

**सा** – तत्र देवसंहितायाः फलसंबन्धं दर्शयन्नध्येतुस्तत्फलप्राप्तिमाह — **स्वर्ग्येति** । यासौ पूर्वोक्ता **देवसंहिता स्वर्ग्या** स्वर्गार्हा स्वर्गप्राप्तिहेतुर्**भवति** । अतो **यः** पुरुषस्**तथाधीते** देवसंहितारूपेणोपांशुस्वरेणाधीते [सः] **स्वर्गं लोकं गच्छति** ॥ ६ ॥ 5

पशव्यासुरसꣳहिता भवति । पशुमान् भवति यस्त-थाधीते ॥ ७ ॥ 10

**द्विज** – **पशव्येति** । या सर्वप्रत्यक्षा **असुरसंहिता** व्याख्याता सा पशूनां सुखकरी । **यो ब्राह्मणस्तथाधीते** सर्वं **प्रत्यक्षम्** अधीते स **पशुमान् भवति** । तत् कथम्? पशूनां दुग्धादिद्रव्यैः असुरवच्छरीरपोषको भवतीत्ययमाशयः । अथवा **पशुमानिति** पशुवद्भवति । ब्रह्मजन्मावतीर्णोऽपि पशुसमानो ज्ञेय इत्ययमाशयः ॥ ७ ॥ 15

**सा** – असुरसंहितायाः फलसाधनमाह – **पशव्येति** । **पशव्या** पशुभ्यो हिता पशुप्राप्तिहेतुर**सुरसंहिता भवति** । अतो **यस्तथा** तेन **प्रकारेणासुरसंहिता**-त्मना तारस्वरेण **अधीते** स **पशुमान् भवति** बहुपशुको **भवति** ॥ ७ ॥

ब्रह्मवर्चस्यर्षिसꣳहिता भवति । ब्रह्मवर्चसी भवति यस्तथाधीते ॥ ८ ॥ 20

---

1. PR. उपोद्भाव्याः, B. उपोद्भाव्य for उद्भाव्य.
2. BP. add तस्याश्च after सा.
5. R. om. सायण भाष्य om. **स्वर्ग्या** .
7. T. रूपेणोपा – broken upto गच्छति ।।
13. BP. om. तत् कथम्?
16. R. om. सा भाष्य on **पशव्या** .
18. T. ता[र]ब्रह्मस्वरेण for तारस्वरेण.
19. A. वर्चस्वी for वर्चसी.

**द्विज** – **ब्रह्मेति**। या पूर्वम् **ऋषिसंहिता** प्रतिपादिता सा **ब्रह्मवर्चस्या** ज्ञेया। ब्रह्मवर्चस्यलक्षणफलप्रदायिनी **ब्रह्मवर्चस्या** ऋषिसंहिता ज्ञेया। ऋषयस्तु सर्वाध्ययनेन ब्रह्मवर्चसमेवेप्सन्ति। यो **ब्राह्मणस्तथाधीते** स **ब्रह्मवर्चसी भवति**। ऋषिसमानो भवतीत्यर्थः ॥ ८ ॥

5 **सा** – अथ ऋषिसंहितायाः अध्येतुः फलमाह – **ब्रह्मवर्चस्येति**। यासा-**वृषिसंहिता** ऋषिसंबन्धिनी मध्यमस्वरात्मिका पूर्वोक्ता संहिता सा **ब्रह्मवर्चस्या**। ब्राह्मं तेजः **ब्रह्मवर्चसं** तदर्हा। अतस्तदाधारभूता **भवति**। अन्यत् पूर्ववद्योज्यम् ॥ ८ ॥

अथैतास्तिस्रः सꣳहिता भवन्ति । देवहूरेका । वाक्
10 शबहूरेका । अमित्रहूरेका ॥ ९ ॥

**द्विज** – अत्र एतासां तिसृणां फलमुदाहृत्य **अथ** प्रकारान्तरेण फलद्योतनसंहिता अपरास्तिस्रः संहिता उदाहरति – **अथैता** इति । **अथ** अनन्तरमेता वक्ष्यमाणा [ **तिस्रः** ] त्रिसंख्याकाः **संहिता भवन्ति**। तासां या **प्रथमा** सा **देवहूः**। देवान् **ह्वयति आह्वयति** इति **देवहूः**। अयमाशयः। यया संहितया
15 इन्द्रादयो देवास्तदध्ययनं श्रोतुं तदध्येतारमीक्षितुं तत्समीपमागच्छन्तीति। इति प्रथमा व्याख्याता ॥

अथ द्वितीया – **वाक्शबहूः**। वागुच्चरितस्वैरः शबम् अतीवाशुभं
18 **पदार्थं ह्वयते** आह्वयते **इति वाक्शबहूः** ॥

---

3. BP. यो यो ब्रा° for यो ब्रा°.
5. MR. om. अथ; M. यासु for यासौ°.
6. T. मध्य – रात्मिका damaged.
7. MR. om. अतस्.
9. My. वाक्छबहूः A. वाक्वहूः for वाक्°... .
12. BPV. उदाहरन्ति for उदाहरति.
13. VPB. वच्यमाना° R. उच्यमाना° for वक्ष्यमाणा°.
14. VP. यथा for यया.
17. B. adds सा before वाक्°; BP. °स्वरा for °स्वरैः.

अथ तृतीया – **अमित्रहूरेका** । अमित्रान् चोरादिहिंसाकर्तॄन् आह्वयतीति **अमित्रहूः** । यया प्रयुज्यमानया संहितया अत्यन्तमशुभं मृत्युसमानं फलं जायते । अनेन व्याख्यानेन इदमुक्तं भवति । अमित्र[ाः] चोरादयः तस्य उपार्जितं सर्वं गृह्णन्ति ॥ ९ ॥

**सा** – अथान्यास्तिस्रः संहिता अनुक्रामति — **अथैता** इति । **अथ** पूर्वोक्तसंहितात्रयानन्तरम् एताः वक्ष्यमाणाः **तिस्रः संहिता भवन्ति** । तासां मध्ये **एका देवहूः** देवाह्वानशीला । अन्या **त्वेका वाक्शबहूः** वाक्संबन्धिनी प्रलापरूपा वाक् तदाह्वानशीला । अपरा **मित्रहूः** मित्राणां सखीनामाह्वानशीला ॥ ९ ॥

## सा या मन्द्रस्वरवती सा देवहूः । आ हास्य देवा हवं गच्छन्ति यस्तथाधीते ॥ १० ॥ 10

**द्विज** – एतास्तिस्रः संहिता उदाहृत्य अथ एतासां लक्षणमुदाहरति — **सा या मन्द्रेति** । **या** संहिता प्रयोगकाले मन्द्रस्वरेणोच्चार्यते **सा मन्द्रस्वरवती** । मन्द्रस्वरेणोच्चार्यमाणा **देवहूर्भवति** । सा कथं देवहूर्भवति? **आ हास्य देवा हवं गच्छन्ति** । **ह** इति निपातः । **आ** इत्युपसर्गः । **अस्य** अध्ययनकर्तुः 15
**हवम्** आह्वानं प्रति श्रुत्वा **देवा** आगच्छन्ति । **आ** इत्युपसर्गः क्रियायां योज्यः । **उपसर्गाः क्रियायोगे** । (पा. १. ४. ५९) इति वचनात् । यद्यपि इह क्रियोपसर्गयोः त्रिपदव्यवधानं तथापि **व्यवहिताश्च** (पा. १. ४. ८२) इति पाणिनिस्मरणान्न दोषः । अयं भावः । एतच्छास्त्रोक्तप्रकारेण या या 19

---

1, 3. PVR. चौरा° for चोरा°.
5. T. breaks off after अनुक्रामति.
7. M. °शब्दहूः for °शबहूः.
8. मित्रहूः *see* CN.
10. B. मन्द्रा for मन्द्र°.
12. B. उद्धृत्य for उदाहृत्य.
13. P. मन्द्रास्वर° for मन्द्रस्वर°.
15. R. om. आ इत्युपसर्गः । अस्य अध्ययनकर्तुः.
16. R. हवः for हवम्; R. श्रुताः for श्रुत्वा.

ऋक् अधीयते **यया यया** ऋचा या या देवता स्तूयते सा सा देवता तत्समीपमा-
गच्छतीत्यर्थः । **अस्य** [इति] कस्य? **यस्तथाधीते** मन्द्रस्वरेण अधीत इति ॥१०॥

**सा** – अथासां लक्षणं संज्ञानरूपं फलं चाह – **सा या मन्द्रस्वरवतीति** ।
**सा** पूर्वोक्ता **या** संहिता **मन्द्रस्वरवती,** उरसा उच्चार्यमाणः स्वरो मन्द्रस्वरः,
5 तद्वती संहिता **देवहूर्नाम** । **यः** पुरुषस्तथा मन्द्रस्वरेण**ाधीते** तस्य **हवं** आह्वानं
प्रति **देवा आगच्छन्ति** । यदा स्तुतिभिराह्वयन्ति तदा शीघ्रं देवा आगता
भवेयुरित्यर्थः ॥ १० ॥

**अथ यत् क्रुबितमिव निरुदितमिव सा वाक्शबहूः ।**
**क्षिप्रं मरिष्यतीति विद्याद्यस्तथाधीते ॥ ११ ॥**

10 **द्वि** – तिसृणां संहितानां मध्ये देवहूर्व्याख्याता । वाक्शबहूर्व्याख्यायते
**अथ यद्** इति । **क्रुबितमिव** निरुदितया संहितया उच्चार्यते **सा वाक्शब-
हूर्ज्ञेया** । क्रुबितमिति बल्बलाकारवर्णैः अविस्पष्टाक्षरैः । अस्तव्यस्तैरित्यर्थः ।
**निरुदितमिति** निकृष्टम् । रुदितमिव **यस्तथाधीते** । बल्बलाकारमिव **निकृष्ट-**
रुदितमिव अध्ययनं करोति । तस्याः संहितायाः फलमिदमुच्यते – **क्षिप्रं**
15 **मरीष्यतीति विद्यात्** । जानीयात् । को भावः? एवंविधां वाक्शबहूलक्षणां
बल्बलाकारवर्णां निकृष्टरुदितस्वरां प्रयुज्यमानां यः कश्चिच्छृणोति स एवं
ब्रूयात् । अथवा संहितास्वरूपादेव विद्यात् । किमिति? **अयं निकृष्टाध्ययनकर्ता**
**क्षिप्रं** शीघ्रं **मरिष्यतीति** । दोषश्रवणात् वाक्शबहूर्न प्रयोज्येत्यर्थः । इति
19 द्वितीया व्याख्याता ॥

---

2. B. तस्य for अस्य; R. adds "अस्य" before कस्य.

4. R. trans या after सा.

6. M. आगच्छा for आगता.

12. P. उपविश्य साक्षरैः for अविस्पष्टाक्षरैः.

13. BV. बल्बलोकार° for बल्बलाकार°.

14. P. (उ)द्दृश्यते, B. (उ) दृच्यते, V. (उ) दच्यते, R. उद्दिश्यते for (उ) च्यते *see* CN.

15. BV. °शबहूर्लक्षणां for शबहू°.

17. P. °सरूपदेवता, B स्वरूपदेवता for स्वरूपादेव *see* CN.

**सा** – एवमेषा प्रशस्तफलत्वात् प्रयोज्या। अन्ये तु द्वे विपरीत-फलत्वाद्वर्जनीये इत्यभिप्रेत्याह – **अथ क्रुबितमिवेति** । **अथशब्दः** पूर्वोक्त-संहितातो विशेषद्योतनार्थः। या संहिता **क्रुबितमिव ग्लानाक्षरा** क्षीणस्वरेण भवति। तथा **निरुदतमिव** रोदनसदृशी भवति **सा वाकशबहूर्नाम** संहिता। अतो **यस्तथाधीते** स **क्षिप्रं मरिष्यतीति** विनष्टो भवेदिति **विद्यात्** जानीयात्॥ ११॥ 5

अथ यदाक्रन्दितमिव निक्रन्दितमिव सामित्रहूः सर्व-ज्यानिं ज्यास्यतीति विद्याद् यस्तथाधीते॥ १२॥

**द्वि** – अथ तृतीया **अथ यदिति**। **यत्** या संहिता **आक्रन्दितमिव निक्रन्दितमिव** प्रयुज्यते **सामित्रहूर्नाम** भवति। अमित्रहूरिति शत्रुचौरादीन् 10 आह्वयतीत्यर्थः। तार्तीयं स्वरमप्यतिक्रम्य अधीतं सत् आक्रन्दितमिव निक्रन्दि-तमिव स्यात्। **यस्तथा** आक्रन्दितनिक्रन्दितस्वरेण **अधीते** तस्यायं दोषः। **सर्वज्यानिं ज्यास्यतीति विद्यात्**। **सर्वज्यानिं** सर्वसमृद्धिहानिं **ज्यास्यति** प्राप्स्यति। एतद्दोषश्रवणात् इयमपि कदाचिन्न प्रयोज्येत्यर्थः। तथा च **छन्दोगशिक्षायाम्** — 15

न तां समीरयेद्वाचं या प्राणमुपधारयेत्।
प्राणानामुपरोधेन वैस्वर्यं चोपजायते॥ (ना. शि. २. ८. ९)

इति॥ १२॥

**सा** – **अथ यदाक्रन्दितमि**ति। तथा **या** संहिता **आक्रन्दितमिव** 19

---

1. MR. एषां for एषा, R. °फलत्वम् for °फलत्वात्; R. om. प्रयोज्या। अन्ये तु द्वे विपरीतफलत्वाद्.

2. R. अवर्जनीयम् for वर्जनीये.

3. R. अत्यब्धिमिव गाहमाना, M. त्यबितमिव गानाकारा for क्लबितमिव ग्लानाक्षरा. *see* CN.

4. M. तदा for तथा.

10. BV. हूर्नामा, P. °हूनामा for °हूर्नाम.

12. V. om. °निक्रन्दित°.

14. P. om. च.

आक्रन्दितम् आक्रोशनमिव **निक्रन्दितं** नितरां क्रन्दनमिव दैर्घ्येणाक्रोशनमिव भवति सा **मित्रहूर्नाम** संहिता । **यः** पुमान् **तथा**क्रन्दननिक्रन्दनसदृशस्वरेण**अधीते** स **सर्वज्यानिं ज्यास्यति** सर्वस्य धनस्य हानिं प्राप्स्यतीति जानीयात् । एषा संहिता **मित्रहूर्नाम** मित्राणामाह्वानशीला । तेषु च गृहमागतेषु तत्रत्यं धनमुपभोगेन क्षीयते । अतो यद्यप्येषा मित्रहूरिति नाम्ना श्रेयसी तथापि फलतो दुष्टेति तात्पर्यम् ॥ १२ ॥

**तद्वै खलु समृद्धिमेव ध्यायन्नुपासीत ॥ १३ ॥**

**द्विज – तदिति ।** तत् तस्मात् कारणात् । **वै** इति निश्चितम् । **वाक्शबहूलक्षणाम्** अमित्रहूलक्षणां च परित्यज्य **समृद्धिमेव ध्यायन्नुपासीत** प्रयुञ्जीत । अस्यायं भावः । या संहिता प्रयुक्ता सती बहून् **कामान्** समर्द्धयति तां प्रयुञ्जीतेत्यर्थः । सा का? देवहूः ॥ १३ ॥

**सा** – एवं काश्चित्संहिताः प्रतिपादिताः । अथ आसां कतमा उपास्यत्वेनोपादेया कतमा हातव्या इति विवेक्तुमाह – **तद्वै खलु इति । अत्र** पूर्वोक्तानां मध्ये यस्याः फलं समृद्धं संपूर्णं शोभनं तामेव ध्यायन् । विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहो ध्यानम् । तथा च परमार्थतस्तत्र तत्प्रवृत्त्यैकसंतानत्वात् ध्यानमिति एवंभूतं ध्यानं कुर्व**न्नुपासीत** समृद्धिफलायोपासनं कुर्वीत ॥ १३ ॥

**सा यादीनतमा संपूर्णा संसृष्टा संयता वाक् सा पुत्र्यपशव्या । तद्यथावाते वाति प्रजा निर्मुच्यन्त एवमेतया ॥ १४ ॥**

**द्विज – सा येति । सा या** देवहूरुक्ता तस्या एव फलान्तरं दर्शयति ।

---

1. R. om. इव; M. निकृन्दनं for निक्रन्दितं.
2. M. °निकृन्दन° for निक्रन्दने.
7. MYA. एतद् for तद्.
9. B. °हूर्लक्षणां for °हूलक्षणां.
10. R. om. अस्य.
14. R. trans फलं after शोभनं; R. adds उपासीत after ध्यायन्.
15. M. om. °प्रत्यय°; R. तद्वृत्त्यैकसंतानात् for तत्प्रवृत्त्यैक° ...

**या अदीनतमा** अदीनस्वरेण अतीव बहुलं प्रयुज्यते **सा अदीनतमा। संपूर्णा** ह्रस्वदीर्घप्लुतभेदैर्न्यूनातिरिक्तदोषरहिता । **संसृष्टा** इति अस्थानोच्छ्वासविच्छेद-रहिता। **संयता** अनन्यचित्तेन प्रयुज्यमाना। सा अदीनतमा **संपूर्णा संसृष्टा संयता वाग्** उच्चरिता संहिता **पुत्र्यपशव्या** भवति । अस्यायमाशयः । सा देवहूः एतल्लक्षणैः प्रयुज्यमाना पुत्रपौत्रपशुहिरण्यादिसमृद्धिं ददातीत्यर्थः । किंच । 5
परितापं च शमयति । क इव? **यथावाते वाति प्रजा निर्मुच्यन्ते । यथा अवाते** अकाले । अथवा अवातप्रदेशे **वायुर्वाति** । अर्थाच्छीतलो वाति । तदा **प्रजाः** तस्मिञ्छीतले वायौ वाति सति परितापलक्षणाद्धन्धना**न्निर्मुच्यन्ते** । विनिर्मुक्ता भवन्ति । **एवमेतया** उक्तलक्षणया संहितया प्रयुज्यमानया **संप्रयोक्तारः** आध्यात्मिकाधिदैविकाधिभौतिकलक्षणात्तापत्रयान्निर्मुच्यन्ते ॥ १४ ॥ 10

**सा** – अथैतस्य संहितोपासनस्य त्रिविधं फलमाह – **सा यादीनतमे**ति। **सा** पूर्वोक्ता **या वाक् अदीनतमा** अतिशयितस्वरा शिरोगतेन स्वरेण उच्चै-स्तरामुच्चार्यमाणा स्वैरक्षरैश्च **संपूर्णा संसृष्टा** ताल्वादिभिः स्थानैः संयोजिता **संयता** स्पृष्टकरणादिभिः प्रयत्नैः सम्यङ्नियमिता । एवंभूता **या वाक् सा पुत्र्यपशव्या** पुत्रेभ्यः पशुभ्यश्च हिता । **तद्** तस्मात् **वाते** वाति सति क्षिप्रं 15
गच्छति सति प्रजाः प्राणिनो **यथा** दुःखेभ्यो **निर्मुच्यन्ते** निःशेषेण विमुच्यन्ते **एवमेतया** पूर्वोक्तविशेषणविशिष्टया वाचा संहितोपासकः फलं प्राप्नोति ॥ १४ ॥ 17

---

1. B. बह्वलं for बहुलं; BP. प्रयुज्येत for प्रयुज्यते.

2. R. om. इति.

7. R. अवाते for अवात°.

8. R. om. तदा.

9. BV. तया for एतया.

11. R. विविधं for त्रिविधं; M. दीन° for अदीन°.

12. M. अतिशयेन स्वरा for अतिशयितस्वरा.

13. M. उच्चार्यमाण° for उच्चार्यमाणा; MR. संपूर्णमेव for संपूर्णा *see* CN; R. ताल्वादि° for ताल्वादिभिः.

14. R. om. संयता.

15. M. om. तद्; R. adds तथा after तद् and om. तस्मात्; R. om. सति.

**अथ या मध्यायिनी संपूर्णा संसृष्टा संयता वाक् सा पुत्र्य-पशव्या। तद्यथा वातोऽप्सु शनैर्वान् सुखी भवत्येवमेतया ॥ १५ ॥**

**द्विज** – अत एतस्या एव फलान्तरं दर्शयति – **अथ या मध्यायिनीति** । एतद्व्याख्यानं पूर्वव्याख्यानेनैव सिद्धम् । अस्य विशेषो व्याख्यायते । मन्द्र-
5 तारस्वरान्तर्भूतेन मध्यमस्वरेण प्रयुज्यते इति **मध्यायिनी** । यथा **वातो** वायुः नदीतडाकादिस्थास्वप्सु स्थावरासु जङ्गमासु च **शनैर्**विरम्य विरम्य **वान्** आत्म-व्यापारं कुर्वन् सन् तेन शीतोदकस्पर्शेन सुखी भवति । स्वयमेव परमानन्दमाप्नोति । एवम् उक्तलक्षणायाः देवहूसंज्ञायाः उक्तविधानेन प्रयोक्ता सुखीभवति। तत्प्रयोजनेन परमानन्दमाप्नोति ॥ १५ ॥

10 **सा** – इत्थमुच्चस्वरोपासितुः फलमुक्तम् । अथ मध्यमस्वरोपासने तदाह – **अथ या मध्यायिनीति** । अथ-शब्दः प्रकारान्तरद्योतनार्थः । **मध्यायिनी** मध्ये कर्णस्थाने यन्ती गच्छन्ती, मध्ये वर्तमाना मध्यस्वरेण उच्चार्यमाणा [चेत्यर्थः] । **पुत्र्यपशव्ये**त्यन्तं पूर्वेण समानम् । तत् तस्माद् **यथा वातो** वायुः **अप्सु** जलेषु **शनैः** शनैर्मन्दं [**वान्**] गच्छन् अप्सु गतशीत-
15 प्रत्ययः **सुखी** शीतस्पर्शेन सुखयिता भवति । **एवमेतया** मध्यमस्वरयुक्तया वाचा संहितोपासकः फलमश्नुते ॥ १५ ॥

**अथ योत्सृष्टा गुल्मीभूतासंपूर्णासंसृष्टासंयता वाक् सा-पुत्र्यपशव्या । तद्यथा वातेनातिशीघ्रं वाता बहुविभग्नं प्रभग्नं शेत
19 एवमेतया ॥ १६ ॥**

---

9. BV. °युञ्जनेन for °योजनेन.

10. R. इति for इत्थम्.

12. MR. मार्गे for मध्ये *see* CN; MR. यन्ति गच्छन्ति for यन्ती गच्छन्ती.

13. MR. पुत्र्या° for पुत्र्य°; R. om. (अ)न्तं; M. (अ)न्तः for (अ)न्तं; R. समानः for समानम्; R. तत्समासाद्य for तस्माद्यथा.

14. R. धावन् for वातः; शनैःशनैः *see* CN; R. om. second अप्सु; M. adds वातः before अप्सु; R. om. गत°.

15. R. °प्रत्ययसुखी for °प्रत्यय. सुखी.

18. R. वातो° for वाता.

**द्विज** – अस्या देवहूसंज्ञायाः नानारूपफलं दर्शयित्वा अथान्ययोः अमित्रहूवाक्शबहूसंज्ञयोः समानमेव दोषं दर्शयति -- **अथ योत्सृष्टेति** । **या** संहिता **उत्सृष्टा** । अतीव उच्चस्वरेण वर्तमाना **उत्सृष्टा** । अथवा उच्चनीच-स्वरभेदवर्जिता अन्यथा प्रयुक्ता **उत्सृष्टा** । अत एव **गुल्मीभूता** । तृणगुल्मवन्नीचपदार्थसमाना । **अफल्दा वै** । **असंपूर्णा** स्वरव्यञ्जनाद्यैर्न्यूना । 5
**असंसृष्टा** अस्थानोच्छ्वासविच्छेदेन विरामेण च प्रयुक्ता । **असंयता** अन्यवित्तेन अप्रयत्नेन पठिता । एवंविधा **वाक्लक्षणा** संहिता प्रयुक्ता सती **अपुत्र्यपशव्या** भवति । अयमाशयः । एतल्लक्षणैः दूषितायाः संहितायाः प्रयोक्तुः पुत्रपौत्र-पश्वादीनां हानिर्भवति । प्रतिषेधात्माकार उभयत्र पुत्रपदे पशुपदे च योज्यः । किंच । **यथा वातेन** वायुपदार्थेन **अतिशीघ्रं वाता** पुनःपुनः अतिप्रचण्ड- 10
वेगवता वृक्षगृहादिकं **बहुविभग्नं** बहुधा विभक्तं विविधप्रकारभक्तं **प्रभग्नं** प्रकृष्टबलाद्भग्नं **शेते** भूमौ **प्रपतेत्** । एवं लक्षणदूषितायाः संहितायाः स्वरादि-दोषलक्षणेन उग्रवातेन प्रयोक्तुर्गृहादिकमपि प्रपतेत् ॥ १६ ॥

**सा** – अथ मन्द्रस्वरोपासने फलमाह — **अथ गोत्सृष्टेत्यादिना** ।
**उत्सृष्टा** उन्नीता **गुल्मीभूता** प्रौढो गुल्मवृक्षः स यथा लतादिभिर्वेष्टितो भवति 15
तथा उरस्येव वेष्टिता कर्णादिस्थानमप्राप्ता मन्द्रस्वरेणोच्चार्यमाणे [त्यर्थः ।] 16

3. R. om. उत्सृष्टा after वर्तमाना.
4. B. °वर्द्धिता for °वर्जिता.
5. R. °समानफलदा for °समाना । अफलदा वै ।
6. PR. °चित्तेन for °वित्तेन.
7. B. °विध for °विधा.
8. V. °लक्षण° for लक्षणैः.
9. R. °षेधार्थाकारः for °षेधात्माकारः *see* CN.
10. BVP. वातात्, R. वातः for वाता.
11. BV. °वतात्, P. °वातात् for °वता.
13. BPV. दूषित° for दोष°.
15. MR. उन्मिता for उन्नीता. *see* CN.
16. M. प्राप्ता for (अ)प्राप्ता; R. °माणा for °माणेत्यर्थः.

अपुत्र्यपशव्येत्यन्तस्य पूर्ववद्योजना । तत् तस्माद् [यथा] वातेन वायुना अतिशीघ्रं वाताः चलिताः महीरुहास्तत्र बहुविभग्नं बहु अवयवजातं विभग्नं विशेषेण भग्नं प्रभग्नं प्रकर्षेण भग्नं च यथा भवति तथा पृथिवीं (व्यां ?) शेते शेरते । ऐवमेतया शनैस्तरामुच्चार्यमाणया वाचा संहितोपासकः

5 फलमाप्नोति ॥ १६ ॥

## अथैतास्तिस्रः संहिता भवन्ति । शुद्धादुःस्पृष्टानिर्भुजेति ॥ १७ ॥

द्विज – एता देवहूप्रभृतीः फलदोषसहिता उदाहृत्य अथापरास्तिस्रः संहिता उदाहरति — अथैता इति । अथ अनन्तरम् एता वाच्यमानाः (वक्ष्यमाणाः ?) नानासंज्ञया तिस्रः त्रिसंख्याकाः संहिता भवन्ति । तासां

10 नामधेयानि — प्रथमा शुद्धा । द्वितीया अदुःस्पृष्टा । अनिर्भुजा तृतीया । स्नानाचमनशुद्धप्रदेशासनपुरःसरम् अधीयत इति शुद्धा । अस्थानोच्चरितस्वरव्यञ्जनास्यैर्वर्णैः अधीयत इति दुःस्पृष्टा । तद्विपरीता अदुःस्पृष्टा । एतच्छ्रुतिमूलमवलम्ब्य नारदाद्यैः स्थानान्यपि विस्तृतानि । स्वस्थानास्थानाध्ययनस्य फलदोषावपि दर्शितौ । तद्यथा —

15 अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥
(पा. शि. १३)

कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू ।
19 स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥

---

1. M. adds सति यावत् before अपुत्र्य°; M. सुपुत्र्या°, R. अपुत्र्या° for अपुत्र्य°.

2. M. °विभक्तं for °विभग्नं; R. अवयवाजाताः for अवयवजातं; MR. विभग्नाः विशेषेण भग्नाः for विभग्नं विशेषेण भग्नं *see* CN.

3. R. cm. च.

4. R. adds प्रकर्षेण before शेरते; M. °स्ताम् for °स्तराम्.

7. R. गुण° for फल°; PR. °संहिता for °सहिता.

8. BP. हरन्ति for °हरति; R. उच्यमानाः for वाच्यमानाः.

9. PR. °संज्ञास्तिस्रः for संज्ञया तिस्रः.

14. R. फल° for गुण°.

जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः ।
ए-ऐ तु कण्ठ्यतालव्या ओ-औ कण्ठोष्ठजौ स्मृतौ ॥
(पा. शि. १७–१८)

अस्थानोच्चरितस्य तत्रैव दोषवचनम् —

कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् । 5
न तस्य परि(पाठे?)मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥
(पा. शि. ५०)

इति । स्थानोच्चरितस्य फलवचनम् —

सुतीर्थादागतं व्यक्तं स्वाम्नायं सुव्यवस्थितम् ।
सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥ (पा. शि. ५१) 10
एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः ।
सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥
(पा. शि. ३१)

इति । एवं शास्त्रान्तरबहुवाक्यश्रवणाद् अस्थानदूषिता न प्रयोज्येत्यर्थः । अदुःस्पृष्टा व्याख्याता ॥ 15

अथ तृतीया अनिर्भुजा व्याख्यातव्या । जानुबाह्यनिर्गतभुजद्वयेन हस्तद्वयेन अधीयत इति निर्भुजा । जानूपरिस्थापितेन हस्तद्वयेन प्रयुज्यमाना अनिर्भुजा । एवं यथा अनिर्भुजा भवति तथा प्रयोज्येत्यर्थः । एतदपि सर्वमेतच्छ्रुतिबलान्नारदेन स्पष्टीकृतम् । तथा —

हस्तौ सुसंयुतौ धार्यौ जानुभ्यामुपरिस्थितौ । 20
गुरोरनुकृतिं कुर्याद्यथा ज्ञानमतिर्भवेत् ॥
(ना. शि. १. ६. ३) 22

---

5. P. °वर्गं for वर्णं.

8. स्थानोच्चरितस्य *see* CN.

9. V. जग्धं for व्यक्तं.

10, B. राजति for राजते.

14. PR. °वचन° for °वाक्य°.

17. R. adds तद्विपरीता before जानू°,

20. B. तु संयतौ for सुसंयतौ.

वचनान्तरं च —

विरला नाङ्गुलीः कुर्यान्मूले चैना न संस्पृशेत् ।
अङ्गुष्ठाग्रेण ता नित्यं मध्यमे पर्वणि स्पृशेत् ॥

इति ॥ (ना. शि. १. ६. ६)

5 अनिर्भुजेत्यनेन वाक्येन एवमुक्तं भवति। किम्? सामवेदसंहिताध्ययनं जानुद्वयोपरिस्थिताभ्यां हस्ताभ्याम् अङ्गुलीषु अङ्गुष्ठाग्रेण स्वरितैः स्वरैः कर्तव्यमिति॥ १७

**सा** – एवमुपास्यत्वेन पूर्वोक्तानां संहितानां त्रिविधं फलमुक्तम् । अथान्यास्तिस्रः संहिता उपासनीया इति दर्शयन् स्पष्टं ता उद्दिशति — **अथै-तास्तिस्र** इति । **अथ**शब्दः प्रकारान्तरद्योतनार्थः । एतास्तिस्रः संहिताः

10 वक्ष्यमाणा उपासनीयाः सन्ति ॥ १७ ॥

**अथैषा शुद्धा संहिता भवति सर्वेभ्यः कामेभ्यः । तद्यथा समञ्जनवता रथेन यं कामं कामयते तमभ्यश्नुत एवमेतया ॥ १८ ॥**

**द्विज** – अत्र एतासां तिसृणां लक्षणमुक्त्वा अथ प्रयोगफलं दर्शयति — **अथैषे**ति । **या शुद्धा संहिता** सा प्रयुक्ता सती **सर्वेभ्यः कामेभ्यः** सर्वकाम-

15 प्राप्तये **भवति** । केन क इव? **यथा समञ्जनवता रथेन** रथोपवेष्टा इव । सम्यग् अञ्जनं समञ्जनम् । समञ्जनं विद्यते यस्मिन्नसौ समञ्जनवान् । तेन समञ्जनवता रथेन । अत्र अञ्जनशब्देन रथचक्रपरिवर्तमानोपहाराः सूत्रघृतादयो ज्ञेयाः । तेन रथेन रथोपवेष्टा यत्र यत्र यां यां दिशं गतः **यं कामं कामयते** तं कामम् **अभ्यश्नुते** प्राप्नोति । एवं शुद्धसंहिताख्यपरिवर्तनेन रथेन

20 तत्प्रयोक्ता सर्वान् कामान् अवाप्नोतीति सिद्धान्तितम् ॥ १८ ॥

---

1. BPR. °न्तरे for °न्तरं.
2. P. चैनान् for चैना.
3. B. तान् for ता.
5. R. अनेनेदं for अनिर्भुजे°... एवम्.
7. R. °सनेन, M. °स्येन for °स्यत्वेन.
8. M. तदा for ता.
10. R. उपासमाः सन्ति, M. उपासन्ति for उपासनीयाः सन्ति.
15. R. om. इव.
17. R. °पायाः for °पहाराः.
19. BV. add सम् before अभ्य°.
20. R. सिद्धम् for सिद्धान्तितम्.

सा – तत्र शुद्धायाः फलसंबन्धमाह — अथैषा शुद्धेति । सर्वकाम-प्राप्त्यर्थं शुद्धा संहिता उपासनीयेत्यर्थः । एतदेव सदृष्टान्तमुपपादयति — तद्यथेति । तद् इति वाक्योपन्यासे । यथाञ्जनवता रथेन चरन् पुरुषो यं कामं कामयितव्यं फलं कामयते तं काममतिदूरस्थमपि रथेन शीघ्रं गत्वा यथाभ्यश्नुते एवमेतया पूर्वोक्तया शुद्धसंहितया कामयितव्यं सर्वं फलं तदुपासकः प्राप्नोति ॥ १८ ॥ 5

**अथैषादुःस्पृष्टा संहिता भवति सर्वेभ्यः कामेभ्यः । तद्यथा समञ्जनवता पूर्णखेन रथेन यं कामं कामयते तमभ्यश्नुते । एवमेतया ॥ १९ ॥**

द्विज – अथैषादुःस्पृष्टेति । एतद्व्याख्यानमपि पूर्वव्याख्यानेनैव सिद्धम् । अत्र पूर्णखेनेत्ययं विशेषः । पूर्णं च तत् खं च पूर्णखम् । खम् अन्तरिक्षम् । कैः पूर्णम्? चन्द्रग्रहनक्षत्रैः । तद्वद्रथः पूर्णखः । ईषामारभ्य धूःपर्यन्तं सुवर्णरजताद्यैर्धातुभिर्विचित्रितः पूर्णखमिव राजते । अतः पूर्णखः । तेन पूर्णखेन । अन्यत्सर्वं व्याख्यातमस्ति ॥ १९ ॥ 10

सा – द्वितीयस्याः फलसंबन्धदर्शन[मपि] पूर्ववत्सदृष्टान्तमुपपादयति – अथैषादुःस्पृष्टेति । पूर्णखेन । चक्रस्य विवरमाक्लेदनेन पूर्णं यस्य स तथोक्तः, [तेन] । अपूर्णखो हि रथः निम्नोन्नतदेशगमने भग्नाक्षो भवेत् । अयं तद्वैलक्षण्यात् परप्राप्तये संपद्यत इत्यर्थः । अन्यत्पूर्ववद्योज्यम् ॥ १९ ॥ 15 18

---

2. M. वै for (ए)व.
3. M. युक्षाजानवता for यथाञ्जनवता.
4. M. adds सर्वं after कामयितव्यम्; M. °विरोधेन for °पि रथेन.
5. R. om. यथा; R. तया for एतया.
10. BP. पूर्ववद् for पूर्व.
13. B. पूर्णम्, P. पूर्णः for पूर्णखम्.
15. R. °बन्धं दर्शयति; M. °बन्धदर्शन (–) for °बन्धदर्शनमपि; R. om. पूर्ववत् and उपपादयति.
16. R. विवरः क्लेदेन पूर्णः for विवरमा°... ; M. om. स.
17. R. trans. अयं after °वैलक्षण्यात्.

**अथैषानिर्भुजा संहिता भवति सर्वेभ्यः एव कामेभ्यः। तद्यथा समञ्जनवता पूर्णखेन समाहितेन रथेन यं यं कामं कामयते तं तमभ्यश्नुते। एवमेतया॥ २०॥**

**द्विज** – इह अदुःस्पृष्टां फलद्योतनसंहितां व्याख्याय अथ अनिर्भुजायाः प्रयोगफलं दर्शयति — **अथैषानिर्भुजेति**। ऋज्वर्थम्। **समाहितेनेत्ययं** विशेषः **समाहिताः** आरोपिताः स्थापिता भक्ष्यायुधादयः मार्गोपस्काराः एतस्मिन् असौ समाहितः तेन **समाहितेन रथेन**॥ २०॥

**सा** – अथ तृतीयस्याः संहितायाः पूर्ववत् फलसंबन्धं दर्शयन् तदुपपादयति — **अथैषानिर्भुजेति**। **अनिर्भुजाख्या संहिता हि सर्वेभ्यः कामेभ्य एव** सर्वकामप्राप्त्यर्थमेव उपासनीया। नान्यस्मै फलायेत्यर्थः। **समाहितेन** कृतसमाधानेन जीर्णं चक्रयुगादिकमवयवं परित्यज्य अभिनवीकृतेनेत्यर्थः। अन्यत् पूर्ववद् योज्यम्॥ २०॥

**अथैतास्तिस्रः संहिता भवन्ति वायोरिन्द्रस्याग्नेः। सर्वावृद्धा वायोः। सर्ववृद्धेन्द्रस्य। उत्सेधपरोक्षवृद्धाग्नेः॥ २१॥**

**द्विज** – इह एतास्तिस्रः शुद्धाद्याः संहिताः सफला वर्णयित्वा अथ वृत्तिदेवताविशेषेण अपरास्तिस्रः उदाहरति — **अथैता** इति। **एताः** व्याख्यायमानाः **तिस्रः** त्रिसंख्याकाः **संहिता भवन्ति**। तासां संज्ञाम् [अभि] धत्ते — या प्रथमा सा **सर्वा अवृद्धा**। द्वितीया **सर्ववृद्धा**। **उत्सेधपरोक्ष-**

---

4. BP. अदुःस्पृष्टा ... संहिता व्याख्याता. R. अदुस्पृष्टा फलद्योतनेन व्याख्याता for अदुःस्पृष्टां ... .

6. V. मार्गोपहाराः यस्मिन् for मार्गोपस्काराः एतस्मिन्.

8. R. om. पूर्ववत्.

9. M. निर्भुजाख्या for अनिर्भुजाख्या.

10. R. प्रयोजनाय for फलाय.

11. R. जीर्णं for जीर्ण.

17. B. संहिता सा संज्ञाम्. P. संहिता ससंज्ञा for संहिता ... संज्ञाम्; R. om. भवन्ति। तासां: R. संज्ञा दधते for संज्ञामभिधत्ते.

18. R. adds तत्र before या.

**वृद्धा** तृतीया। एतास्तिस्रः **छन्दोगपरिशिष्टादिषु** विस्तरतो व्याख्याताः। तासां प्रथमा व्याख्यायते। **सर्वा अवृद्धेति।** एककलोनया मात्रया अधीता अवृद्धा भवतीति सिद्धम्। **सर्ववृद्धेति।** ह्रस्वदीर्घप्लुतभेदैः वर्णैर्यथोक्तमात्रैरधीता सर्ववृद्धा भवति। **उत्सेधपरोक्षवृद्धेति।** उत्सेधा चासौ परोक्षा च उत्सेधपरोक्षा। उत्सेधपरोक्षा चासौ वृद्धा च उत्सेधपरोक्षवृद्धा। उत्सेधेति किंचिदधिकेति एककलाधिकया मात्रया अधीता उत्सेधा भवतीत्ययमाशयः। परोक्षा वृद्धा च उक्तार्थौ। एवमुक्तप्रकारेण अधीता उत्सेधपरोक्षवृद्धा भवतीति सिद्धार्थः। एतन्मूलाधारात् परिशिष्टकारैः स्पष्टीकृतोऽयमर्थः। तद्यथा तिस्रो वृत्तयो भवन्ति। द्रुता, मध्यमा विलम्बितेति। द्रुतायां वृत्तौ त्रिकला मात्रा भवति। चतुष्कला मध्यमायाम्। पञ्चकला विलम्बितायाम्। द्रुता, रोहिणी, श्यामा, मध्यमा, श्वेता विलम्बितेति। एतास्तिस्रो वृत्तयः क्रमशो यथावसरे प्रयोक्तव्याः। तथा च **पाणिनिनारदौ** —

**अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम्।**
**शिष्याणामुपदेशार्थे कुर्याद् वृत्तिं विलम्बिताम्॥**

(ना. शि. १. ९. २१)

एतासाम् आर्चिकसंहितावृत्तीनाम् अयं देवताविशेषः। एका वायोः, एका इन्द्रस्य, एका अग्नेः। या अवृद्धा कलया न्यूना सा वायोः। या मध्यमा सर्ववृद्धा चतुष्कला सा इन्द्रस्य। या उत्सेधपरोक्षवृद्धा विलम्बितविशिष्टा कलयाधिका सा अग्नेः। अथ गानकालेऽपि संहितायाः अयमेव सर्वो विधिर्वेदितव्यः। तत्र द्रुतादिवृत्तीनां देवता भिन्नाः स्युः। तथा च **छन्दोगपरिशिष्टम् — वायव्या द्रुता वृत्तिर्बार्हस्पत्या मध्यमा सौरी विलम्बिता** इति॥ २१॥

---

2. R. °कलोनायां मात्रायामाद्या, P. °कलोनायामाद्या for कलोनया मात्रया.

3. R. om. इति सिद्धम्.

4. BPR. om. उत्सेधपरोक्षवृद्धेति.

6. BP. धिकायां मात्रायां for °धिकया मात्रया.

13. अभ्यासार्थे°. this verse is not found in the पाणिनिशिक्षा.

इति सकलवेदार्थप्रकाशकस्वतःसिद्धचतुर्दशविद्याकुशलद्विजराजश्रीवंशभूषण-भट्टश्रीविष्ण्वात्मजकृतौ छान्दोम्यसंहितोपनिषद्भाष्ये आर्चिकसंहिताधिकारे प्रथमः खण्डः ॥ १ ॥

॥ आर्चिकाधिकारोऽपि समाप्तः ॥

5 **सा** – अथान्यास्तिस्रः संहिता विशिष्टदेवताः कामोपासनाय विदधाति – **अथैतास्तिस्रः संहिता भवन्ति वायोरिन्द्रस्याग्ने**रिति । कस्य कीदृशीत्यत आह — **सर्वावृद्धा वायो**रिति । सर्वाण्यवृद्धान्येकमात्राणि यस्याः सा **वायोः** संहिता वायुदेवता वायुदैवत्यत्वेनोपासनीयेत्यर्थः । सर्वाण्यक्षराणि वृद्धानि त्रिमात्रकाणि यस्याः सा **सर्ववृद्धा इन्द्रस्य संहिता** । उत्सेधः यो व्यञ्जनानां
10 बहूनां संयोगस्तस्मिन् परतो यदक्षरं परोक्षवृद्धं स्वभावत एकमात्रमपि गुरुसंज्ञित्वा[द्] द्राघिष्ठं भवति तादृशमक्षरं यस्याः सा **उत्सेधपरोक्षवृद्धा अग्नेः** संहिता भवति । तासामपि संहितानां विशिष्टदेवतासंबन्धकथनादेव विशिष्ट-फलसंबन्धोऽप्युक्तो वेदितव्यः ॥ २१ ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
15 संहितोपनिषद्ब्राह्मणभाष्ये प्रथमः खण्डः ॥ १ ॥

---

2. BPV. छान्दोग्ये for छान्दोग्य°.

5. R. °देवताकामो° for °देवताः कामो°.

8. R. °देवत्येन for °दैवत्यत्वेन; M. सर्वा° for सर्वाण्य°.

9. R. °मात्राणि, M. °मात्रिकाणि for °मात्रकाणि; M. उत्सेधयः for उत्सेधः यो.

10. R. परके for परतो.

11. R. °परोक्षा for °परोक्षवृद्धा.

# द्वितीयः खण्डः

इह पूर्वस्मिन् खण्डे आर्चिकसंहिताप्रयोगविधिः सम्यगुक्तः । तदुत्तरं गानसंहिताविधिर्वक्तव्यः । तत्र गानविधावपि स एव उक्तप्रयोगविधिः सर्वो द्रष्टव्यः । अत्र तु यो विशेषविधिः तमुत्तरस्मिन् वक्ष्यति ॥

**अथैषा समावर्तनीयेति वेदितव्या संहिता भवति ॥ १ ॥** 5

**अथैषेति** । **एषा** वक्ष्यमाणा गानसंहिता **समावर्तनीया** भवति । अत्र गानविधौ संहिताशब्दो विचारणीयः । यतो गानविधौ कुत्रचित्कुत्रचिदेकाक्षरावसानं पर्व । कुत्रचिद्द्व्यक्षरावसानम् । कुत्रचित् त्र्यक्षरावसानम् । यथा – **अग्न आयाहि वी[तये]** (सा. १. १) इत्यस्यामृचि गीयमाने साम्नि सामारम्भे द्व्यक्षरावसानं पर्व । यथा – **ओग्नाइ** (ग्राम. १. १.१.१) । तथा – 10 **उदु त्यं जातवेदसम्** (सा.१.३१) इत्यस्यां गीयमाने साम्नि **जा** (ग्राम.१,३.३१.१) शब्दे एकाक्षरावसानं पर्व । अत्रैव सामारम्भे त्र्यक्षरावसानं च । तथा **राजनसामारम्भे** (आ. गा. ४. ४. १२३. १) एव स्तौभिकानि बहून्युदाहरणानि **हिम्** (त्रिः) **हो** (त्रिः) एवमादीनि । तर्हि एवंविधे गाने क्रियमाणे संहितात्वं कुतः संभवति ? संहितात्वं तु संततगाने एव सार्थकं संभवति । अत्रोच्यते । 15 वेदगानं तु – **प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनानि भक्तयः** ( पञ्चविधसूत्र १. १. १) इत्येवमादिभिर्वाक्यैः पञ्चविधत्वविधिना कर्तव्यम् । एवं क्रियमाणे प्रस्तोतुद्गातृप्रतिहर्तॄणां यज्ञकर्तॄणाम् एकैकस्य या या भक्तिः सा अविरामा 18

---

2. R. om. तदुत्तरं ... वक्तव्यः । B. तदुक्तं, P. तदुक्त्वा न, V. तदुत्तं for तदुत्तरं.

6. V. वक्ष्यमाण° for वक्ष्यमाणा.

7. PR. om. one कुत्रचित्.

10. V. ओग्नायि for ओग्नाइ.

12. V. om. च; P. adds च after तथा.

14. BP. om. तर्हि एवंविधे गाने ... संहितात्वं तु संतत°, R. एवं गाने संहिताशब्दः कथं for तर्हि ... सार्थकं.

17. P. °विधित्व° for विधत्व°.

प्रयोक्तव्या । एतस्मिन्नर्थे संहिताशब्दः सार्थको भवति । एषा गानलक्षणा संहिता **समावर्तनीया** सम्यगावर्तनीया । समावर्त्य समावर्त्य प्रयोक्तव्या । तत्र बहुप्रकारं समावर्तनम् । एकं तु तत्र वेदस्वीकरणादूर्ध्वं ब्रह्मयज्ञार्थे पुनः पुनः समावर्तनम् । अथापरम् **अग्न आयाहि वीतये** (सा. १. १) इत्यत्र त्रीणी सामानि । 5 **पुनानः सोम धारय** (सा. १. ५११) इति [अत्र] षोडश सामानि । **परीतो षिञ्चता सुतम्** (सा. १. ५१२) इत्यत्र पञ्चदश सामानि । एवं द्वितीयं समावर्तनम् । अथापरम् । एकस्मिन्नेव साम्नि यत् पदं गीतं तदेव पुनःपुनरभ्यस्यते । तेनापि समावर्तनीया सिद्धा । एतदप्युदाहरणं यथा **पर्के – आयाहीवीइतोयाइ । तोयाइ** (ग्राम. १. १. १. १.) । तथा राजनादिषु सर्वाण्येव पदानि 10 त्रिरभ्यस्तानि । अथापरं समावर्तनम् । स्तोत्रगतेषु सामसु आज्यपृष्ठोक्तलक्षणेषु ताभिरेव तिसृभिः स्तोत्रीयाभिरष्टाचत्वारिंशस्तोमोऽपि संपाद्यः । एवं समावर्तनीया बहुप्रकारा इति वेदितव्येति । यासु यासु सामास्व्यासु संहितासु यद् यद् वक्ष्यमाणमिति करणं तत्तत् सर्वं वेदितव्यम् ॥ १ ॥

तत्र का इतिकर्तव्यता? उच्यते —

15 **लोपातिहारपरोक्षसमापाद्याः ॥ २ ॥**

लोपेति । लोपाश्च अतिहाराश्च **लोपातिहाराः** । लोपातिहाराः अत्र गानविधौ **परोक्षे** अदृष्टोत्पादने फले **समापाद्याः** संपादितव्याः । लोपातिहारोपलक्षणेन नानास्तोभवर्णनप्रत्युत्क्रमातिक्रमकर्षणस्वारेफलोपानुस्वारादिसंधिकरणरोहोदात्तानुदात्ताभिगीतविनतप्रणतसंधिवत्पदवद्गतागतसंकृष्टविकृष्टभावादयः सर्वे 20 वक्ष्यमाणा गानगीतिविशेषा अपि अदृष्टोत्पादनार्थे फले योजनीया इति

---

2. BP. om. समावर्तनीया; RV. om. °सम्यगावर्तनीया,

3. B. °यज्ञार्थी for यज्ञार्थं.

8. V. °वोयितोयायि । तोयायि for वीइतो° ... .

9. P. om. second तोयाइ.

12. PR. om. वेदितव्येति ... वक्ष्यमाणम् इति.

18. V. om. लोप°.

19. B. om. (अ)नुदात्त°; BVP. °विकृष्टा भावादिसर्वे for विकृष्टभावादयः सर्वे.

20. PR. om. °गीति°.

प्राप्तम्[1]। तत्र बहुप्रकारो लोपः। कुत्रचित् सर्वपदस्य लोपः। कुत्रचित् पदद्वयस्य। तथा पदत्रयस्य। कुत्रचिद् व्यञ्जनस्य लोपः। कुत्रचित् रेफस्य लोपः। कुत्रचित् स्वरस्य। तथा एकाक्षरप्रभृतिलोपश्च। तत्र उदाहरणानि— मा नो हृणीथा (ग्राम. ३. १२. ११०. १-२) इत्यत्र द्वयोः साम्नोः पादस्य लोपः। अया रुचा (ग्राम. १२. १२. ४६३. १-३) इति [अत्र] पूर्वयोर्द्वयोः साम्नोः पादत्रयेणै (°द्वयेनै?) व सामसमाप्तिर्दृष्टा। एकाक्षराद्युदाहरणानि— तमिन्द्रं जोहवीमि (ग्राम. १२. १२. ४६०. १) इत्यत्र अन्त्याक्षरलोपः। उदाहरणं त्री इति। अग्ने त्वं नः (ग्राम. १२. ११. ४४८. २४) इत्यत्र वरूथ्यपदस्य लोपः। अत्र केचन एवं च वदिष्यन्ति। ईदृग्विधैः बहुलोपैः प्रयुज्यमानेषु सामसु कथं सिद्धिर्जायते? [इति।] उच्यते। यद्यत्साम येन येन ऋषिणा स्तुतं तस्य तस्य तत्तत्सामगतस्वरविशिष्टपदगीतसंधिगीतानेकस्व[रादि]लोपग्रहणात् व्यञ्जनरेफादि[षु] लुप्तेष्वपि सिद्धिर्जाता। तत्सामप्रयोगेषु स्वरगीतिविशेषेणैव जगदीश्वरस्य परमाह्लादविशेषात् तथा तत्तत्सामदेवतानां चापि परमतृप्तेश्च साम्नि साम्नि नानाफलं दृश्यते। तद्यथा श्रुत्ताष्टके (ग्राम. १०. ३. ३७१. १-८) प्रथमेन हिरण्यं लभते। द्वितीयेन धान्यम्। तृतीयेन पशून्। चतुर्थेन पुत्रान्। पञ्चमेन ग्रामम्। षष्ठेन यशः। सप्तमेन ब्रह्मवर्चसम्। अष्टमेन स्वर्गं लोकम् अवाप्नोति। (सा. वि. ब्रा ३. २. ५) इति। अत्र एकस्यामेव ऋचि अष्टसाम्नामपि स्वगीतिविशेषान्नानाफलमुक्तम्। एवं सामसु

---

1. PR. om. सर्वपदस्य लोपः.

2. V. om. लोपः। कुत्रचित् रेफस्य लोपः.

3. V. क्वचित् for कुत्रचित्.

6. V. om. एकाक्षरा° ... ... °त्री इति; BP. एकक्षरानुदा°, R. एकाक्षरो° for एकाक्षराद्यु°.

8. BP. वरूथ्यस्य for वरूथ्य°.

9. P. Om. च.

11. V. °शिष्टगीत्याह्लादात् for °शिष्टपद° ... °ग्रहणात्; BPV. add एतावता एवं देवर्षीणां after ग्रहणात्; V. om. °रेफ°.

12. V. om. तत्.

18. BPV. यस्याम् for एकस्याम्; R. om. स्व°.

व्यञ्जनादि[षु] लुप्तेष्वपि गीतिविशेषेणैव स्तोतॄणामपि सिद्धिर्भवत्येव। तत्र दृष्टान्तः – **माध्यंदिने वै पवमाने देवा यज्ञायज्ञीयेन यज्ञं संस्थाप्य स्वर्गं लोकमारोहन्** (तां. ब्रा. १५. ९. १४) इति। अनया श्रुत्या अपूर्णे एव यज्ञे **यज्ञायज्ञीय**गानगीतिमहोदर्कात् स्वर्गलक्षणा सिद्धिर्दर्शिता। तथा **नैमिशीये**—

5 **ते ह सप्तदशभ्य एवाध्युत्तस्थुः** (तां. ब्रा. २५. ६. ५) इति। तथा **दृति वातव-तोरयने** - **विषुवति वातवानुत्तिष्ठति। समापयति दृतिः।** (तां. ब्रा. २५. ३. ६) इति। एवमिहापि **अपूर्णायामृचि** गीयमानेषु सामसु व्यञ्जनादि[षु] लुप्तेष्वपि देवतातृप्तिः। स्तोतुरुत्तरफलं भवत्येव। अन्ये लोपाश्च भावाश्च एतच्छ्रुतिबलात् पुष्पाचार्यैः बहुशः स्पष्टीकृताः। अत्र अतिरोहोदाहरणानि यथौर्णायवोत्तरे –

10 **वयाहोवा३ऽसिनप्त्योर्हितः** (ग्राम. १३. १. ४७६. २) तथा **हाविष्कृते** – **त्व३ऽसुतोमदाहाउन्तमाः** (सा. १३२४) **रक्षोहाविश्वचाहा उर्षाणाइः** (सा. ६९०)। एवमादीनि॥ २॥

**सर्वत्र गताः स्तोभाः सर्वत्र निवृत्ताः सर्वत्र प्रवृत्ताः॥ ३॥**

**सर्वत्रेति।** **सर्वत्र गताः** सर्वासु देवतासु गता व्याप्ताः स्तोभाः।

15 आर्चिकसंहितायां **सर्वत्र निवृत्ताः** सन्तः अत्र गानविधौ **सर्वत्र प्रवृत्ता** भवन्ति। अथवा। **सर्वत्र निवृत्ता** इति घोषणाध्ययनविधौ सर्वेभ्यः पादेभ्यः निवृत्ता आद्यन्ता एव दर्शिताः। ते प्रयोगकाले सर्वेषु पादेषु प्रवृत्ता भवन्ति।

**आद्यन्तदर्शनस्तोभो विधागीतेषु सामसु।**
**पादे पादेऽनुसंहार्यः सोपायो निधने भवेत्॥**

20 (स्तोभानुसंहारः।)

21 इति। अथवा। केषुचित्सामविशेषेषु सर्वपादगताः स्तोभा भवन्ति। यथा —

---

4. R. स्तोत्रगीतिमहिम्ना for गानगीतिमहोदर्कात्.
5. V. एवाभ्यु° for एवाध्यु°; B. om. तथा दृतिवात°...°दृतिरिति.
8. VR. °रुक्त° for °रुत्तर°.
13. B. सर्वत्रा° for सर्वत्र.
15. BPR. सर्वतः for सन्तः.
16. V. °ध्यापन°.
17. B. आद्यन्तावेव for आद्यन्ता एव.

सघायस्ताइ । ए । (ग्राम. ९. २. ३६५. १) इति । तथा हो । होइ । अक्रान्त्समुद्रः प्रथमे विधमान् । (ग्राम. १५. ६. ५२९. १) इत्यादि ॥

[तथा केषुचित्सामसु अभ्यस्ता भवन्ति] यथा वागहोत्तरे—हाउहाउ । हुप् । प्रकावियाम् (ग्राम. १५. ६. ५२४. ४) द्विरभ्यस्तः । कुत्रचित् पञ्चाभ्यस्तः । ए२ । (पञ्चकृत्वः) । योः ।। (पञ्चकृत्वः ।) (आ. गा. ४. ४. ११८. १) इत्यादि । तथा केषुचित्सामसु सर्वावयवनिवृत्ताः ॥ यथा गृत्समदयो : प्रथमे — योनीः । तआइ (ग्राम. ८. ९. ३१४. १.) एवमादीनि । कुत्रचित् सामविशेषेषु सर्वत्र प्रवृत्ता भवन्ति । अस्यायं भावः । इयमेवर्गग्निः साम तदेतदेतस्यामृच्यध्यूढं॰ साम तस्मादृच्यध्यूढं॰ साम गीयते (छां उ. १.६.१) इति श्रुतेः सर्वसामगानम् ऋच्यध्यूढम् ऋच्यधिष्ठितम् एव प्राप्तम् । तत् कुत्रचिद् व्यावर्तयति । तत् कथम्? केषुचित् सामसु ऋक्पदधर्मा अपि प्रस्तावादारभ्य निधनावसानं यावत् स्तोभपदविशेषैरेव भवन्ति । यथा अरण्येगेये सोमव्रत (प्राजापत्यव्रत?) – देवव्रतादिषु — सोमासोमा । (त्रिः) । यत्रचक्षुः (आ. गा. ४. १. १७४ स्तोभगानम्) ॥ अधिपा । ताइ । (आ. गा. ५. ५. २१२-२१३ स्तोभगानम्) ॥ उन्नयामि । होइ ॥ (द्वे त्रिः) । (आ. गा. ६. ३. २९० स्तोभगानम्) ॥ एवमादीनि ॥ ३ ॥

## सर्वत्र प्राच्यपाञ्चालीषु मुक्तं सर्वत्रामुक्तम् ॥ ४ ॥

सर्वत्रेति । इदं वाक्यं बह्वर्थम् अतीव गर्भितार्थं [च] व्याख्यायते । पाणिनिनिपातितप्राङ्–अपाङ्–लक्षणशब्दद्वयस्थानीयौ प्राच्यपाञ्चनामधेयौ । अनुलोमप्रतिलोमविशिष्टस्वरगतौ अत्र छान्दसौ निपात्यौ । अत्र प्राचि (ची ?)-

1. BPR. सखायस्त्वा for सघायस्ताइए. *see* CN.
2. BPR. om. इत्यादि ॥ तथा ... भवन्ति.
3. V. om. तथा केषुचित् ... °इत्यादि *see* CN.
7, PR. पवम(ना)दीनि for एवमादीनि.
8. V. वागेवर्क् प्राण: for इयमेवर्गग्नि: (°ग्ने: P.)
10. BP. पर्व° for एव; R. om. एव.
13. V. °देवतादिषु for देवव्रतादिषु; R. om. °देवव्रत°; सोमासोमा *see* CN.
18. B. गभीतार्थं, V. गंभीतार्थं, PR. गम्भीरार्थं for गर्भितार्थं°.
19. P. प्रा-इ-अपा-इ for प्राङ्-अपाङ्.
20. P. अत्र for अनु; B. °शिष्टं स्वरे गतो, P. शिष्टस्वरे गत(ौ) for °शिष्टस्वरगतौ·

शब्देन प्राञ्चः अनुलोमाः पञ्चविधकर्षणभूताः स्वराः । अपाञ्चशब्देन अपाञ्चः अष्टविधप्रत्युत्क्रमभूताः प्रतिलोमाः स्वराः । तेषां प्राच्यपाञ्चानां प्राङ्ङपाङ्-स्वराणाम् आलयः (आल्यः?) स्थानं या अङ्गुल्यः ताः प्राच्यपाञ्चाल्यः (°ल्यः?) । तासु **प्राच्यपाञ्चालीषु** सर्वासु अङ्गुलीषु **मुक्तं** न्यस्तं प्रयुक्तं गानं कर्तव्यमिति सिद्धोऽर्थः । **कस्मादिदमुच्यते?** । **आर्चिकसंहितायां** तु यतः सर्वत्र **अमुक्तम्** । अङ्गुष्ठतर्जनीमध्यमाभिरेव पठितम् । अत्र तत् सर्वासु अङ्गुलीषु पठितव्यमिति भावः । प्राञ्चः स्वराः कर्षणलक्षिताः । कर्षणलक्षणं **छन्दोगपरिशिष्टे** उदाहृतम् । **पञ्चविधं कर्षणम् । आद्वितीयकर्षणम्, आतृतीयकर्षणम्, आचतुर्थकर्षणम्, आमन्द्रकर्षणं मन्द्रश्चातिस्वार्यात् कृष्यते इति** । य एव स्वरः प्रथमादारब्धः स एव आ अतिस्वार्यात् कृष्यते । यथा **वासिष्ठे – पताश्रू** २३४५ **ता** ६५६ **इ** (ग्राम. ७. ४. २७२. ३) । **परिशिष्टे** [एतत्] सर्वं स्पष्टीकृतम् । एवमादीनि कर्षणलक्षणानि । प्रत्युत्क्रमविशिष्टा अपाञ्चस्वराः नीचस्वरादुच्चस्वरेषु स्वर्यन्ते । तत्रोदाहरणम् – **दूतांश्वो विश्व-वेदसाम्** (ग्राम. १. २. १२. १) । एवमादीनि अपाङ्स्वरोदाहरणानि । अथवा **सर्व[त्रा]मुक्त**मित्ययमाशयः । गानकालेषु यत् सर्वासु अङ्गुलीषु प्राप्तं तत्र(त्?) कुत्रचित् **सर्वत्र** आर्चिकवद् **अमुक्तमपि** दृष्टम् । **सर्वत्रेति** प्रस्तावादारभ्य आ निधनात् अङ्गुष्ठतर्जनीमध्यमाभिरेव पठ्यते । तत्रोदाहरणं यथा **रैवत-ऋषभे** (? **भौ**) (ग्राम. ४. ५. १६०. २; ग्राम. १२. १. ४६७. ३) ॥ ४ ॥

**सर्वत्र सौष्टव्यम् ॥ ५ ॥**

**सर्वत्रेति** । प्रागपाङ्नीयमानेषु स्वरेषु प्रत्युत्क्रमातिक्रमकर्षणातिस्वार-

---

1. V. °धर्षण° for कर्षण°.
2. P. प्रा-इ-अपा-इ, B. प्रा-प्रा- for प्राङ्-अपाङ्; R. om. प्राङ्ङपाङ्.
7. R. °लक्षणाः for °लक्षिताः.
8, 9. BV. कर्ष° for कर्षण° leaving °विधं कर्षणं and °मन्द्रकर्षणं in B.
10. P. °रम्य for °रब्धः; BVP. add सम्यक्स्वरः after कृष्यते.
13. BPR. नीचस्वराः for नीचस्वराद्.
14. BPR. om. अपाङ्° ... सर्वासु.
17. BPR. om. आ निधनात् ... स्तोत्रधर्मेण स यदा p. 39. l. 9.

विशिष्टेषु प्रयुक्तम् (? क्तेषु) अपि यथा सौष्ठव्यं भवति तथा गेयम्। शोभनप्रकारेण स्तुतं सुष्टुतं तस्य भावः सौष्टव्यम्। एतावता किं प्राप्तम्? बहुस्वरेषु गीयमानेष्वपि वैस्वर्यं न गेयमिति भावः। वैस्वर्ये महान् दोषो दृष्टः। तथा च नारदः —

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥
इति ॥ ५ ॥ (ना. शि. १. ५)

## लुप्तेषु रेफसंधयः सर्वत्र ॥ ६ ॥

लुप्तेष्विति। विरते गाने अनुस्वारव्यञ्जनादीनां यो लोपः प्राप्तः स्तोत्रधर्मेण स यदा सततं क्रियते तदा रेफसंधयः कर्तव्याः। उदाहरणमपि यथा त्रैष्टुभे औशने – अश्वमत्वाद्याजिनम्मा। जया २३० ताः (ग्राम. १५. ६. ५२३. ३.) तथा च पुष्पाचार्यः – व्यञ्जनमपराङ्गं विरामे लुप्यते। (पु. सू. ७. ५) इति। अत्र रेफशब्देन अनुस्वारादयोऽप्युपलक्ष्यन्ते ॥ ६ ॥ 10

## सर्वत्र ह रोहपूर्वेष्वरोहपूर्वाणि ॥ ७ ॥

सर्वत्रेति। अयमर्थः। आर्चिकसंहितायाम् अरोहपूर्वाणि सर्वाणि वचनानि अत्र गानसंहितायां बृहत्सामादिषु रोहपूर्वेषु स्वरेषु गेयानि। द्वितीयस्वरादारभ्य आ चतुर्थस्वरं कृष्यते। तस्य रोहसंज्ञा। यद्यपि कर्षणेनैव रोहः सिद्धः तथापि पृथग्ग्रहणं फलातिशयप्रदर्शनार्थम्। तथा ताण्ड्यब्राह्मणे बृहत्सामाधिकृत्य उक्तम् – त्रीन् प्रथमायां रोहति। भूतं भवद् भविष्यत्तानेवावरुन्धे। (तां. ब्रा. ७. ७. ७) इत्यादि। तथा चोदाहरणम्— 15 20

तु[1] या[2] ३४। औ[3र]हो[4र]वा[5]। तथा द्वितीयो रोहः - त्वां[1र]का[र]ष्ठा[2] ३४। औ[3र]हो[4र]वा[5]। 21

---

1. प्रयुक्तम् ... सौष्टव्यम् *see* CN.
3. V. महद् for महान्.
9. V. तद् for स; BPR. om. आ निधनात् (p. 38. l. 17.)...स यदा.
10. PBV. मार्जयाताः for माजयाताः.
14. BPR. om. ह; MY. अवरोह for अरोह.
15. PR. om. सर्वाणि.
16. BP. add रोहत्सामादिषु before रोहपूर्वेषु.

तथा तृतीयो रोहः – सूर आर्वा२३४ । ताः । (आ. गा. १. २. १४. १)

सर्वत्र उदात्तेष्वनुदात्तानि ॥ ८ ॥

**सर्वत्रेति** । आर्चिकसंहितायां यानि अनुदात्तान्यक्षराणि पठितानि [तानि] गानकाले क्वचित्क्वचिदुदात्तान्यपि भवन्ति । यथा अग्न आ याहि वी
5 (सा. १. १) इत्यत्र **आर्चिकसंहितायां वी**-वर्णः अनुदात्तः पठितः । स **पर्कसाम्नि** अतीव उच्चैर्गीयते । तथा – वो (वी?) इतोया२इ (ग्राम.१.१.१.१) **इत्येवमादि** । अत्र समानधर्मत्वात् अनुदात्तान्यप्यक्षराणि उदात्तं प्राप्तानि । **यथा – ओग्नाइ** (ग्राम. १. १. १. १) इत्यत्रैव ग्नेशब्दः ॥ ८ ॥

अभिगीतेष्वनभिगीतानि सर्वत्र ॥ ९ ॥

10 **अभिगीतेष्विति** । **आर्चिकसंहितायां** सर्वत्र अनभिगीतान्यक्षराणि पठितानि । अत्र गानविधौ कानिचिद् अभिगीतस्वरेण गेयानि । अभिगीतस्वर-लक्षणं **सामपरिशिष्टे** उक्तम् – **अभिगीते द्विमात्रा द्वितीये प्रथमेऽध्यर्धा** [इति।] **स्तोमा२रुद्रा** (ग्राम. १. २. १५. २) **पिन्वो अर्कैः** इत्यादि ॥ ९ ॥

विनामितप्रणामितेष्वविनामितान्यप्रणामितानि ॥ १० ॥

15 **विनामितेति** । **आर्चिकसंहितायां** सर्वत्र **अविनामितानि** पुनः **अप्रणामितानि** अक्षराणि पठितानि । अत्र गानविधौ क्वचित् क्वचिद् विनामितानि **प्रणामितानि** च **गेयानि** । **विनामित** – शब्देन विनतम् । **प्रणामित** – शब्देन प्रणतम् । तयोरपि लक्षणं **छन्दोगपरिशिष्टे** स्पष्टम् । तद्यथा—**विनतं प्रथमादि द्वितीयान्तम्** । **द्वितीयादि तृतीयान्तं प्रणतम्** ।
20 **उत्स्वरितं चतुर्थादि मन्द्रान्तम्** । **अभिगीतं द्वितीयादि प्रथमान्तम्** ।

2. R. om. सर्वत्र.

3: P. om. यानि अनुदात्ता° ... °वीत्यत्र आर्चिकसंहितायाम्.

7. R. om. अत्र ... प्राप्तानि.

8. R. adds समानधर्मत्वात् after °शब्दः.

12. B. (अ)र्धमात्रा for द्विमात्रा.

19. VB. (आ)दिः for )आ)दि.

20. P. तत् स्वरित for उत्स्वरितं; BV. (चतुर्था)दिर् for चतुर्थादि; P. अतिगीत for अभिगीतं.

तथा विनतप्रणतयोरन्तेऽर्द्धमात्रा नीचेन स्वरेण भवति । उच्चेऽध्यर्द्धा दीर्घा । ह्रस्वेऽर्द्धम् । तत्र ह्रस्वस्य उदाहरणम् – यंयं य २० याम् (ग्राम. ९. ११. ३३७. २) । तथा दीर्घस्य — रम्मन्ये ३ दास्वन्तम् ( ग्राम. १२. १२. ४६५. १) । तथा आदित्यव्रते – स्वपामोषधीना २ म् (आ. गा. ६. १. १५७-१५९. १) एवमादीनि ॥ १० ॥ 5

सर्वत्र विसर्गोपग्रहेष्वविसृष्टान्यनुपग्गृहीतानि ॥ ११ ॥

सर्वत्रेति । अस्य वाक्यस्यायमर्थः । अत्र गानविधौ विसर्गोपग्रहेषु विसर्गान्तेषु अक्षरेषु मध्ये यानि अविसृष्टानि अवृद्धानि,–यद्वा अक्षराणि ह्रस्वदीर्घविशिष्टानि, – तानि सर्वत्र अनुपगृहीतानि । उपग्रहरहितानि भवन्ति । अविकृतानि भवन्तीत्यर्थः । एतावता किमुक्तं भवति ? उच्यते । 10 संधौ ह्रस्वदीर्घयोः न्यायप्राप्तः संधिधर्मो भवति । ओत्वं भवति । विरते पदधर्मो भवति । अःकारो भवति । अत्र संध्युदाहरणं सैन्धुक्षिते प्रथमे – अग्निर्वोवृधान्ताम् (ग्राम. १. ३. २१. १) । तथा विरतोदाहरणं तृतीये सैन्धुक्षिते – अग्निवः । ओहाइ । (ग्राम. १. ३. २१. ३) एवमादीनि । अत्र अविसृष्टानीति विशेषोपादानात् विसृष्टेषु वृद्धेषु विसर्गान्तेषु अक्षरेषु बहुप्रकार 15 उपग्रहो विकारो भवतीति सिद्धम् । अत्रोदाहरणानि यथा–त्वामग्ने पूष्कारा-दधी (ग्राम. १. १. ९. १) इत्यत्र मू २३४ र्थ्नो । अत्र विरतेऽपि संधिवद् भवति । तथा उद्वत्प्राजापत्ये – उत्सा २ हो १ इ (ग्राम. १४. ५. ५११. ७) । अत्र संधावपि पदवद्भवति । तथा जिगत्नवस्तेपूतायां वाङ्निधने कौश्चे (पु. सू. ६. ४) इत्येतत्सिद्धार्थः अःकारो वृद्धः (पु. सू. ६. १) इत्यारभ्य 20 खण्डचतुष्टये पुष्पाचार्येण विस्तरतः स्पष्टीकृतः ॥ ११ ॥

सर्वत्र ह्रस्वकर्षणेषु दीर्घकर्षणानि दीर्घकर्षणेषु मन्द्र-कर्षणानि मन्द्रकर्षणेष्वात्तकर्षणानि ॥ १२ ॥ 23

---

1. BV. (अ)प्य° for (अ)ध्य°.
2. BPR. दीर्घे for दीर्घा.
8. VR. om. यद्वा.
11. B. विनते for विरते.
14. V. अन्यत्र विसृ° for अत्र अवि°.
15. अविसृष्टानि *see* CN.
19. B. जिगर्त° for जिगत्न°.

इह तावत् संधिवत्पदवल्लक्षणान्युक्त्वा अथ कर्षणविशेषमुदाहरति – **सर्वत्र दीर्घे**ति । अयम् ऋज्वर्थः । एतावता किमुक्तं भवति? अत्र गानविधौ ह्रस्वाक्षरस्य ह्रस्वकर्षणे प्राप्ते कुत्रचिद्दीर्घकर्षणान्यपि भवन्ति । यथा **यज्ञायज्ञीये–प्रप्रा २ वयममृतम्** (ग्राम. १. ४. ३५. ४)। मन्द्रशब्देन वृद्धकर्षणम् । यथा ऊहगाने – **पप्रीं वयममृतम्** (१. १४ ?) तथा च वचनम् – **दीर्घकर्षणस्य वृद्धिः** (पु. सू. ८. ५) इति । आत्तकर्षणशब्देन आत्तस्वरः समाप्तस्वरः । अतिस्वार इति यावत् ॥ १२ ॥

## सर्वत्र तीधेनावामर्तयोर्विप्रवाकः ॥ १३ ॥

**सर्वत्र तीधेनावे**ति । अयमर्थः । **सर्वत्रे**ति सर्वेभ्यः कामेभ्यः । **तीधेनावा**-लक्षणायाः मर्ता-लक्षणायाश्च संहितायाः **विप्रवाकः प्रयोगः** । कर्तव्य इति वाक्यशेषः । तीधेनावा-पदं विद्यते यस्यां सा **तीधेनावा** । **मर्ता**-पदं विद्यते यस्यां सा **मर्ता** । वारावन्तीय – **यज्ञायज्ञीय** – **विशोविशीयवत्** । ते के संहिते? **तिस्रोवाचाः** (ग्राम. १२. ४७१. १. ६) इत्येतस्मिन् वर्गे **चतुर्थे** साम्नि गीयमाना **तीधेनावा** । **प्रातरग्निः** ( ग्राम. २. ९. ८५. १ ) इत्यस्यां गीयमाना **मर्ता** संहिता । यद्यपि **बृहद्द्वयो हि** (ग्राम. २.९.८८.१-२) इत्यनयोः साम्नोरपि **मर्ता**प्रतीकमस्ति तथापि **मर्तामन्नाद्यकामाय** इत्युत्तर[त्र]-वक्ष्यमाणत्वात्, अथ च **प्रातरग्निः** इत्यत्र हव्यशब्दोपादानात्, प्रथमातिक्रमे कारणाभावाच्च **प्रातरग्नि**रित्यस्य साम्नः **बृहत्कौमुदा**भिधानेन अतीव म(बृ?)-हत्पदार्थप्राप्तेश्च, **कौ** पृथिव्याम् अतीव आमोदहर्षप्राप्तेश्च **प्रातरग्निः** इत्येतस्मिन् **बृहत्कौमुदा**ख्ये साम्न्येव **मर्ता**संहिता **प्रयुक्ता** अन्नपशुपुत्रहिरण्य-ब्रह्मवर्चसाद्यैहिकामुष्मिकाभीष्टसकलकामप्राप्तये अतीव शुभतरा ॥ १३ ॥

अत्र उभे अपि संहिते सर्वकामार्थे उक्ते । उत्तरवाक्ये ते व्यवस्थापयति ॥

---

1. R. om. °वत्पदवल्.
8, 9, 11, 14. P. तीथे° for तीधे.
17. BP. अथवा for अथ च.
19. R. महद्धर्ष° for म (बृ?)हत्पदार्थ°; P. मुद° for आमोद°.
22. उभे *see* CN.
23. BV. °स्थयति for °स्थापयति.

**तीधेनावां वृष्टिकामाय कुर्यान्मतामन्नाद्यकामाय ॥ १४ ॥**

तीधेनावामिति । ऋज्वर्थमेतत् । इह सामवेदस्य सर्वासु शाखासु गानलक्षणविधिः सम्यगुक्तः ॥ १४ ॥

**सर्वत्र चतुर्थस्वरा मन्द्रस्वराश्च प्रस्तावाः ॥ १५ ॥**

अतः **परं** स्तोत्रधर्मेण यो गानविशेषः तमुदाहरति — **सर्वत्रे**ति । स्तोत्रधर्मेण गीयमानेषु सामसु **सर्वत्र चतुर्थस्वरा मन्द्रस्वराश्च प्रस्तावा** भवन्ति । तद्यथा — **ओग्नाइ** (ग्राम. १. १. १. १) अग्निन्दूताम् (ग्राम. १. १. ३. १) । प्रस्ताव[ादि]भक्तिदर्शनेन साम्नां पञ्चविधत्वं दर्शितम् ॥ १५ ॥

**चतुर्थमन्द्रातिस्वार्यस्वराश्च भवन्ति ॥ १६ ॥**

**चतुर्थे**ति । प्रस्तावा इति वाक्यशेषः । अयमर्थः । स एवोक्तप्रस्तावः त्रिभिः **स्वरै**रपि भवति । चतुर्थमन्द्रातिस्वारलक्षणैरपि भवति । यथा — **ओहाइ । यदिन्द्रना । हुषीवू ६ वा** ॥ (ग्राम. ७. ३. २६२. १) ॥ १६ ॥

**प्रथमस्वराश्च द्वितीयस्वराश्च प्रथमद्वितीयतृतीयस्वराश्च भवन्ति ॥ १७ ॥**

**प्रथमे**ति । यदुक्तं चतुर्थादिस्वरेषु प्रण(स्ता?)वः [इति] स एव नियमो नास्ति । किं तर्हि? **प्रथमद्वितीयस्वराश्चापि** भवन्ति । यथा **हो हाइ । अक्रान्त्समुद्रः प्रथमे विध । मान्** । (ग्राम. १५. ६. ५२९. १) । किं च । **प्रथमद्वितीयतृतीयस्वराश्चापि** भक्तयो भवन्ति । यथा **अर्कपुष्पा**- (ग्राम. १६. ९. ५६५. १-२) दिषु । एवं प्रस्तावभक्तिदर्शनाद् उद्गीथप्रतिहारोपद्रव-निधनलक्षणा अपि भक्तयो भवन्ति । इह सर्वेषु स्तोत्रगतेष्वपि सामसु स्वरवर्ण-व्यञ्जनविधि[ः] स्वाध्यायाध्ययनधर्मसमानः ॥ १७ ॥

---

5. B. परः for परं; B. मान° for गान°.

16. R. °स्वरयोश्चापि for °स्वराश्चापि.

18. R. °स्वरैश्चापि for स्वराश्चापि ; V. om. भक्तयः.

21. R. °धर्मः for °धर्म°.

## रथन्तरेऽन्वक्षरं भकारान् ॥ १८ ॥

अतः परं रथन्तराख्ये साम्नि यो वर्णविशेषस्तमुदाहरति — **रथन्तर** इति । रथन्तरविशिष्टे साम्नि **अन्वक्षरं** प्रत्यक्षरमुद्गाता ओँकारावादानन्तरं **भकारान्** विदध्यात् । यद्यपि एतद्वाक्यं सामान्येन प्रस्तावादारभ्य
5 निधनपर्यन्तं प्रवृत्तं तथापि औद्गात्रलक्षणायां प्रभक्तौ उद्गीथस्य अन्त्यवर्तमान-चतुरक्षरं विहाय द्रष्टव्यम् । तथा च ब्राह्मणान्तरम् — **वज्रेण वा एतत् प्रस्तोतोद्गातारमभिप्रवर्तयति यद्रथन्तरं प्रस्तौति । समुद्रमन्तर्धायोद्गा-येद्वागित्यादेयम् । वाग्वै समुद्रः । समुद्रमेवान्तर्दधात्यहिंसायै ॥ ९ ॥ बलवद्वेयं वज्रमेवं प्रवृत्तं प्रत्युद्गृह्णाति ॥ १० ॥ बल्बलाकुर्वता गेयमभि-**
10 **लोभयतेव वज्रमेवाभिलोभयति ॥ ११ ॥** (तां. ब्रा. ७. ७. ९-११) इति । एवं प्रकृतस्वाक्षरस्थानेषु भकाराणां प्रयोगे कृते बल्बलाकारोऽपि कृतो भवति । एवं ब्राह्मण[योः] द्वयोः परस्परं न विरोधः । अन्त्यचतुरक्षरं विहाय इति यद्व्या-ख्यातं तत्र लाट्यायनः प्रमाणम् । **प्राक् प्रतिहाराश्च चतुरक्षरं शिष्ट्वा ॥** (ला. सू. ६. १०. २२) इति ॥ १८ ॥

## 15 स्वरवन्ति व्यञ्जनानि यथाक्षरं दर्शयेत् ॥ १९ ॥

**स्वरवन्तीति** । अयमर्थः । भकारलक्षणानि व्यञ्जनानि **स्वरवन्ति** कृत्वा । **यथाक्षरं** प्रकृतौ प्रत्यक्षरम् । अथवा प्रकृतौ यस्मिन् यस्मिन् अक्षरे यो यः अवर्णादिः स्वरः तत्तत्स्वरवन्ति कृत्वा **दर्शयेत्** । उच्चारयेदित्यर्थः । अथवा **यथाक्षरमिति** स्वाध्याये ये अकारउकारविशिष्टे द्वे अक्षरे प्रथमे स्वरे
20 भवतः भकारप्रयोगेऽपि तद्वत् ते द्वे भका[राक्ष]रे प्रथमे स्वरे प्रयुञ्ज्यात् ।
21 अवशिष्टानि भकाराक्षराणि अपि तत्स्थानीये द्वितीये स्वरे प्रयुञ्ज्यात् ॥ १९ ॥

---

5. PB. उद्गात्र°, R. उद्गीथ°, V. उद्गात्र with औ supra line for उ, for औद्गात्र°.

6. P. ब्राह्मणान्तरे for ब्राह्मणान्तरम्.

13. B. तत् for तत्र.

17. BPV. प्रकृति° for प्रकृतौ; B. अवाप्य for अथवा.

20. R om. भकाराक्षरे.

21. R. om. अवशिष्टानि ... प्रयुञ्ज्यात् ; V. om. अपि.

तद्यथा स्वरेण सर्वाणि व्यञ्जनानि व्याप्तान्येवं सर्वान् कामानवाप्नोति । यश्चैवं वेद ॥ २० ॥

**तद्यथेति** । अनेन वाक्येन रथन्तरप्रयोक्तुः रथन्तरोक्तविधिविदश्च सर्व-कामप्राप्तिलक्षणं समानं फलं प्रदर्शितम् । यथा स्वरेण अवर्णादिविशिष्टेन भकार-लक्षणानि **सर्वाणि व्यञ्जनानि** प्राप्तानि एवं रथन्तरप्रयोक्ता ईप्सितान् शुभलक्षणान् सर्वान् कामान् अवाप्नोति । केवलं रथन्तरस्य प्रयोक्ता एवं प्राप्नोति । एतावता अलम् ? किं तर्हि ? **यश्चैवं वेद इति** । य एतच्छास्त्रोक्तं रथन्तरविधिं **वेद** विजानाति सोऽपि एतदेव फलं प्राप्नोतीत्यर्थः ॥ २० ॥

यस्यैते स्वरवन्तः प्रयुज्यन्ते यश्चैवं विद्वान् प्रयुङ्क्ते यथा चाग्निचन्द्रसूर्यौ भास्वन्तोऽपहततमस्कास्तद्वदुद्गातृयजमानौ भवतः ॥ २१ ॥

**यस्यैते** इति । **यस्य** यजमानस्य यज्ञे **एते** भकाराः **स्वरवन्तः प्रयुज्यन्ते** स्वरवतां भकाराणां प्रयोगो भवति । **यश्च एवं विद्वान्** एवं विधिज्ञः उद्गाता **प्रयुङ्क्ते** प्रयुञ्ज्यात् । **यथा अग्निचन्द्रसूर्या भास्वन्तः** दीप्तिमन्तः **अपहततमस्काः** विनाशिततमस्काः **तद्वदुद्गातृयजमानौ** तेजस्विनौ तमोरहितौ **च भवतः** ॥ २१ ॥

कुत एवंविधफलवन्तौ भवतः ? तत्रोत्तरवाक्यम् —

एवं ह्याह भात्यग्निर्भाति चन्द्रमा भाति सूर्यो भान्ति ज्योतींषि भाति रथन्तरमिति भकाराणामेव दीप्तिं दर्शयति स्वरवताम् ॥ २२ ॥

**एवमिति – हि** यतः कारणात् **अग्निर्भाति** दीप्यते । तथा **चन्द्रमाः**, तथा **सूर्यः**, तथा अन्यग्रहनक्षत्रविशिष्टानि **ज्योतींषि भान्ति** । तथा

---

8. V. तद् for एतद्.

स्वरवद्भिर्भकारैः रथन्तरं दीप्यते । एतेषु ज्योतिर्गणेषु भातीति यद्भकारवत् क्रियापदं तद् भकाराणां दीप्तिं दर्शयति ॥ २२ ॥

रथन्तरस्य स्तोभाः स्वरवन्तः प्रयोक्तव्याः ॥ २३ ॥

रथन्तरस्येति । इह एवं ह्याह इति एतद्ब्राह्मणान्तरफलदर्शनात्
5 रथन्तरस्य भकारलक्षणाः स्तोभाः स्वरवन्तः प्रयोक्तव्याः इति । अत्रै-तच्चिन्त्यते – पूर्ववाक्यैरपि रथन्तरस्य स्वरवतां भकाराणां प्रयोगः सिद्धः । पुनः अस्य वाक्यस्य को विशेषः? उच्यते । सर्वे भकारलक्षणाः स्तोभाः स्वरवन्तः प्रयोक्तव्या एव । न व्यञ्जनवन्तः । किमुक्तं भवति? अन्वक्षरं प्रयुज्यमानेषु भकारेषु यत्र कुत्रचिद् अन्तरा स्वररहितं व्यञ्जनमागच्छति तत्परिहारार्थमिति
10 भावः । यथा अदुग्धा इव (ग्राम. ६. १. २३३. १) इत्यत्र स्वरवतो दकारस्य यदुत्तरं स्वररहितं गकाराख्यं केवलं व्यञ्जनं तत्सदृशम् अन्यदपि व्यञ्जन-मन्तर्भूतं परिहृत्य केवलं स्वरवन्तो भकारा एव प्रयोक्तव्या इति सिद्धम् ॥ २३ ॥

इह एवं स्वरवतां भकाराणां फलं दर्शयित्वा अतः परं अन्तरापत्ति-व्यञ्जनवत् प्रयोगे दोषं दर्शयति —

15 यत्र तु व्यञ्जनवन्तः प्रयुज्येरन् क्षोधुकाववध्यायिनाव-प्रजसावुद्गातृयजमानौ स्यातां तस्मादन्वक्षरं प्रयुञ्जानः स्वरवन्ति व्यञ्जनानि यथाक्षरं दर्शयेत् ॥ २४ ॥

यत्र त्विति । इह प्रयुज्येरन् इति क्रियापदे यद् बहुवचनं तद्
19 बहुयज्ञपरम् । यत्रेति यस्मिन् यस्मिन् यज्ञे यः यः उद्गाता अधिकृतः । ते

---

1. BP. add एते before एतेषु.

2. BP. भकाराख्यं, R. भकाराख्यां for भकाराणां.

4. R. om. एतद्°.

8. R. om. किमुक्तं भवति.

10. PB. अथ for यथा.

13. R. om. इह,

19. P. यज्ञेऽपि य उद्गाता, B. यज्ञे या उद्गाता, R. यज्ञ य उद्गातारः for यज्ञे ... .

सर्वं उद्गातारः यदि व्यञ्जनवतः व्यञ्जनान्तर्भूतान् भकारान् प्रयुञ्जेरन् । एवं-विधप्रयोगाद् उद्गातृयजमानौ क्षोधुकौ क्षुत्तृट्परीतौ चौरादिभयाद्युपद्रवौ च । तथा अवध्यायिनौ अव अधस्तात् वर्तमानलोकप्रापककर्मध्यानरतौ । पुनः अप्रजसौ पुत्रपौत्राद्यपत्यरहितौ स्याताम् । अत्र यतो व्यञ्जनवत्प्रयोगे अतीव पातकसमानो दोषः तस्मात् तद्दोषभयात् उद्गाता स्वरवन्ति व्यञ्जनानि एव दर्शयेत् । परं तु यथाक्षरं दर्शयेत् इति । यथाक्षरमिति यद्यत्प्रकृत्यक्षरम् । न्यूनातिरिक्तदोषभयात् तत्तदक्षरं दर्शयेत् । अनुसरेदित्यर्थः । 5

अत्र रथन्तराधिकरणे स्वरस्य अतीव प्राशस्त्योक्तेः अन्यत्रापि ऋक्साम-प्रयोगेषु स्वरवत्सु व्यञ्जनेषु स्वरस्यैव मुख्यतोक्ता । तथा च नारदः ---

स्वर उच्चः स्वरो नीचः स्वरः स्वरित एव च । 10
व्यञ्जनान्यनुवर्तन्ते यत्र तिष्ठति स स्वरः ॥

स्वरप्रधानं वै( त्रै?) स्वर्यमाचार्याः प्रतिजानते ।
मणिवद् व्यञ्जनं विद्यात् सूत्रवच्च स्वरं विदुः ॥

दुर्बलस्य यथा राष्ट्रं हरते बलवान् नृपः ।
दुर्बलं व्यञ्जनं तद्वद्धरते बलवान्स्वरः ॥ 15
(ना. शि. २. ५. २. ४)

इत्यादि । तथा एकाक्षरे नानाक्षरे स्वर्यमाणेऽपि स्वरस्यैव मुख्यतोक्ता । तथा च छन्दोगपरिशिष्टम् – स्वरस्य वै (त्रै?) स्वर्यं न व्यञ्जनस्य । स्वरश्च स्वर्यते । इति ॥ २४ ॥

इति सकलवेदार्थप्रकाशकस्वतःसिद्धचतुर्दशविद्याकुशलद्विजराज- 20
श्रीवंशभूषणभट्ट-श्रीविष्ण्वात्मजकृतौ छान्दोग्यसंहितोपनिषद्भाष्ये
गानविधौ सामलक्षणविचारे द्वितीयः खण्डः ॥ २ ॥ 22

---

1. प्रयुञ्जेरन् *see* CN.
2. B. °प्रयोगान्, PR. °प्रयोगौ for °प्रयोगात्.

# तृतीयः खण्डः

अथ तृतीयम् (!) आरभ्यते । इह द्वितीये सामसंहितायां गानविधौ लोपातिहारस्वरव्यञ्जनविचार उच्चनीचादिसप्तस्वरलक्षणलक्षिता अष्टादशभावा निरूपिताः । तदनन्तरं स्तोत्रगतसामविधौ प्रस्तावादिसामभक्तयः प्रदर्शिताः ।
5 तत्रापि रथन्तरविशिष्टलक्षणं साम अतीव प्रशस्ततया निरूपितं च । अथ तृतीये स्तोत्रगतसाम्नां यो विशिष्टविधिः तं निरूप्य तदनन्तरं सकलविद्याविषये शिष्यस्य पात्रता पात्रतां निरूपयिष्यति । तद्यथा —

**अथैते आनुदेशिक्यौ संहिते यज्ञेन कर्मणा चरिते भवतोऽन्ततो निधनसामान्यादन्तःसामिकानि निधनानि संप्रसा-**
10 **रयन्ति ॥ १ ॥**

**अथ** अनन्तरं गानस्य **एते** उपलक्षिते **आनुदेशिक्यौ संहिते** । आर्चिकसमुदायस्य मन्त्रलक्षणमनुदेशमनुसृत्य प्रवर्तेते [इति] आनुदेशिक्यौ । ते के? संहिते वेयगानारण्यगानविशिष्टे । ते द्वे यदा **यज्ञेन** यज्ञसंबन्धिना **कर्मणा** ऊहगानविधौ स्तोत्रधर्मेण **चरिते भवतः** तदा इयान् विशेषः ।
15 **अन्ततो निधनसामान्यात्** अन्त्यवर्तमान - इहकार - इडाकार - अथकार - हिषीस्वरादि – निधनसमानत्वात् प्रस्तोतृद्गातृप्रतिहर्तारः गानाधिकारिणः **अन्तः-**
17 **सामिकानि** सामान्तर्वर्तीनि **निधनानि संप्रसारयन्ति** । सम्यक्प्रकारेण

---

4. B. °नन्तर° for °नन्तरं.

11. BPR. om. आनुदेशिक्यौ ... मन्त्रलक्षणम्; V. adds आनुदेशिक्या-विति after सहिते..

12. BPV. गृह्य for °सृत्य.

13. BPR. लोके for ते के?

16. P. °सामान्यत्वात् for °समानत्वात्.

17. B. °वर्तिनानि for °वर्तीनि; R. प्रकर्षेण for प्रकारेण.

विस्तारयन्ति । नानास्वरेषु विस्तरणं संप्रसारणम् । यथा आन्धीगवे – त्वे अप्रश्वानश्श्नथिष्टनाऽ२३४५. १ (ग्राम. १६. ८. ५४५. ६) । तथा धर्म-विधर्मादिषु (ग्राम. ११. ९. ४२९-४३०) । अयं विचारस्तु पुष्पाचार्येण विस्तरतः कृतः । तद्यथा —

आर्चिकं निधनं याये स्तौभिकं वा यदक्षरम् ।
कृष्टाकृष्टं भवेत्स्वार्यमन्तोदात्तं बुधे स्वरम् ॥ 5

(पु. सू. ९. २)

इति । संप्रसारयन्तीति बहुवचनात् निधनेषु त्रयाणामप्यधिकारः । एतद्बीजात् सर्वे निधनमुपेयुः (द्रा. श्रौ. सू. २. २. १०) इति सूत्रकारेण सर्वत्रैवोक्तम् । अनेन वाक्येनैवमुक्तं भवति । स्तोत्रत्वेन गीयमानेषु सामसु 10
साममध्ये यानि निधनसदृशानि पदानि आर्चिकानि स्तौभिकानि वा तानि निधनत्वेन प्रयोक्तव्यानीति ॥ १ ॥

**चतुर्थोदात्ततमान्स्वरान् द्व्यन्तरानुदूहन्ति प्रागुपायान्न चेत् समानपुरुषवचने ॥ २ ॥**

अस्मिन् विशिष्टगानविधौ **चतुर्थोदात्ततमान्** चतुर्थमन्द्रातिस्वार्य- 15
लक्षणान् **स्वरान्** आचार्याः **द्व्यन्तरानुदूहन्ति** । द्व्यन्तरानिति चतुर्थस्वराक्षरं प्रथमे स्वरे उदूहन्ति । उच्चैः कुर्वन्ति । मन्द्रस्थं द्वितीये । अतिस्वार्यस्थं तृतीये । परं तु **प्रागुपायात्** उपायवचनं विहाय मन्द्रस्वरवर्तमाननिधनसमीपं वचनं द्व्यन्तरोच्चं न कर्तव्यमित्याशयः । तत्र उदाहरणम् —

**एहियाऽ६ हा । हो५ इडा ।** [इति ।] **न चेत्समानपुरुषवचने** 20
इति । समानाश्च ते पुरुषाश्च समानपुरुषाः । स्तोत्रगतसामप्रयोगे साधारणा उद्गातार इत्यर्थः । तेषां वचनं समानपुरुषवचनं निधनमित्यर्थः । चतुर्थोदात्त-तमस्वरं निधनं नोदूहितव्यमिति भावः ॥ २ ॥ 23

1. B. विस्तारणं for विस्तरणं ; V. °सरणम् for °सारणम्.
9. PR. om. एतद्बीजात्. B. एतद्विजांत्सर्वे for एतद्बीजात्.
12. B. adds अयमाशयः after इति.
15, 17. B. °स्वार° °for स्वार्य°.

उद्दूहप्रयोगमुक्त्वा अथैतल्लक्षणमुदाहरति —

**तृतीयप्रभृतीनामुदात्ततमः कश्चित् स्वरो भवति तमुदूह इत्याचक्षते ॥ ३ ॥**

**तृतीयप्रभृतीनां** प्रतिलोमवर्तमानानां तृतीयद्वितीयप्रथमस्वराणां मध्ये यः कश्चिदुदात्ततमः स्वरः आचार्याः **तमुदूहं** मन्यन्ते । अत्रोक्तं मध्येनिधनलक्षणम् उदूहगानलक्षणं च पुष्पाचार्यैरपि ऊहगाने लक्षितम् । तद्यथा — **मध्येनिधनानि निगदवृत्तानि प्रयोगवत्स्वाध्याये** (पु. सू. ८. ८) । इति । तथा उदूहविषये —

**यथैतच्चतुर्थमन्द्रातिस्वार्याणां स्वराणां द्व्यन्तरमुच्चमुदूहः ॥**
(पु. सू. ८. ५)

इति । वचनान्तरं च — **अभ्युदूहेन सर्वत्रोहगीनी रहस्यवत्** । (पु. सू. ९. २) इति । तथा च मध्यनिधनविषये लाट्यायनः — **इहकार-इडाथकारौ गीतं च निधनस्वरं हीषीस्वरं च द्व्यक्षरं देवताश्चारण्येगेयेषु तान्यन्तःसामनिधनानि** ॥ (ला. श्रौ. सू. ७. ८. ५) इति ॥ ३ ॥

**तथा च यज्ञे क्रियते ॥ ४ ॥**

यज्ञे यज्ञविशिष्टे ऊहगाने । **तथा** द्व्यन्तरोच्चम् उदूहः **क्रियते** ॥ ४ ॥

**अरण्येगेयं चाधीमहे ॥ ५ ॥**

स उक्त उदूहः कथं क्रियते? यथा यज्ञप्रयोगं विनापि **अरण्येगेयं** वयमधीमहे । तत्रोदाहरणम् - **यद्यावई** । (आ. गा. १. १. १. १) । तथा — **याज्जा याज्जा** । (आ. गा ३. ७. ९१. ४); तथा — **औहो-इत्वामिद्धिहवामहा ए** ॥ (आ. गा. १. २. १४. १) एवमादीनि ॥ ५ ॥

**ग्रामेगेयं च लाङ्गलानामेवैके बहुलम् ॥ ६ ॥**

---

5. BP. om. मध्येनिधनलक्षणम् ... लक्षितम्.
10. R. अभ्यु° for अभ्यु°.
12. R. इडाकारौ for इडाथकारौ.
15. V. द्व्यन्तरोच्चः for द्व्यन्तरोच्चम्.

सामवेदस्य सहस्रशाखामध्ये राणायनीयशाखामध्यवर्तिनी एका लाङ्गलशाखा। लाङ्गलानां लाङ्गलशाखाध्यायिनां मध्ये **एके** ये **कालबविनः शाट्यायनिनश्च** ते **ग्रामेगेयं** गानमपि अरण्येगेयवत् **बहुलं** सर्वम् उदूहेन धर्मेण प्रथमद्वितीयतृतीयस्वरैरेव पठन्ति। यथा **स्वराणां पञ्चमम् — हुवैहो १ इ। यज्जायथाः** (आ. गा ३. ७. ९१. १)। तथा **विष्णोः स्वरीयांसि — हाउहोहाइ। अन्तरिक्षं सुवर्हिचंजगन्मा** (आ. गा. ३. ७. ९२. १ ?)। तथा **सुब्रह्मण्यसाम सुब्रह्मण्यो ३ म्** (द्रा. श्रौ. सू. १.३ ?) ॥ ६ ॥

किंच —

**अनुदात्तमुदात्तम् उदात्तं चानुदात्तम् अवृद्धं वृद्धं वृद्धं चावृद्धमकृष्टं कृष्टं कृष्टं चाकृष्टमित्येवं स्तोत्रीयतमं भवति ॥ ७ ॥** 10

लाङ्गलशाखिनां मध्ये ये कालबविनः शाट्यायनिनश्च ते **यथा सर्वमुदूह**-धर्मेण पठन्ति तथा ते तद्व्यतिरिक्तासु शाखासु यदनुदात्तस्वरमक्षरं तत्सर्वम् उदात्तं पठन्ति। तथा अन्यशाखासु यदुदात्तं तदनुदात्तं पठन्ति। वृद्ध-कृष्टावपि स्वरौ तद्वद् विपरीतस्वरप्रयोगेण पठन्ति। तथा च **पुष्पाचार्यः — कालबविनामपि प्रवचनविहितः स्वरः स्वाध्याये। तथा शाट्यायनिनाम् ॥** (पु. सू. ८. ८) इति। एवम् अन्यशाखाभ्यः विपरीते गाने कृतेऽपि तेषां कालबविनां शाट्यायनिनां च तद् अतीव **स्तोत्रीयतमं भवति**। अतीव शुभतरं भ्राजत इत्यर्थः। किं च। यया यया स्तोत्रीयया या [या] देवता स्तूयते सा सा देवता अन्यशाखिभ्यः विपरीतस्वराध्ययनेनापि स्तुता अतीव स्तुतां मन्यत इत्ययं भावः ॥ ७ ॥ 15 20

---

2. R. om. ये; P. कालभविनः for कालबविनः.

3. R. om. ते.

10. MYT. कष्ट for कृष्ट.

14. BP. यथा for तथा.

15. 17. P. कालभविनाम् for कालबविनाम्.

16. BPR. विपरीतगानेक्षते (RS. क्षते) for विपरीते गाने कृते

20. BPV. स्तुत for स्तुतां.

अथापि याज्ञिका यज्ञेयुक्ता अनुदिशन्ति उदात्तानुदात्तयोरुदात्तं सेवेत, वृद्धावृद्धयोरवृद्धं क्रुष्टाक्रुष्टयोरक्रुष्टमित्येवं स्तोत्रीयतमं भवति ॥ ८ ॥

अस्यार्थः । अस्य गानस्वरूपस्य सामवेदस्य क्रुष्टादिमन्द्रान्तैः । साम-
5 स्वरैर्गीयमानस्य याथातथ्योच्चनीचस्वरवृद्धावृद्धक्रुष्टाक्रुष्टज्ञाने अतीव असंहार्यत्वात् बह्वभ्यासे क्रियमाणेऽपि दुर्घटत्वात् तथा उदात्तानुदात्तवृद्धावृद्धक्रुष्टाक्रुष्टविज्ञापक-शास्त्राभावाच्च प्रयोगगानविधौ तत्तत्संशये प्राप्ते तैर्गानकर्तृभिः कथमध्येतव्यम् इत्याशङ्क्य लाङ्गलश्रुत्यध्ययनप्रमाणमधिकृत्य **यज्ञेयुक्ताः याज्ञिकाः** वेदस्वरूपा महर्षयः । तान् गानकर्तॄन् उप (अनु ?) दिशन्ति । उपदेशं ददतीत्यर्थः । यज्ञे
10 [युक्तं] योगः योगमार्गः निःश्रेयसः पदार्थो येषां ते । अथवा अविरतयज्ञकर्तार इत्यर्थः । **यज्ञेयुक्ता** इत्यत्र छान्दसो विसमासः । **याज्ञिका** इति याजकाः । यज्ञविधिशिक्षापका (!) इत्यर्थः ॥ किमुपदिशन्ति? उच्यते — **उदात्तानुदात्तयोरुदात्तं सेवेत** इति । उदात्तानुदात्तयोर्मध्ये संशये प्राप्ते **उदात्त**मुच्चस्वरं **सेवेत** । यतोऽनुदात्तस्तु उदात्तादेवोत्पद्यत इति प्रमाणम् । किं च । उच्चैरुप-
15 लभ्यमान उदात्तः । नीचैरुपलभ्यमान अनुदात्त इत्येवमादि वेदलोकबहुप्रमाण दृष्टान्तात् उच्चाश्रये प्राप्ये को हि दैवशप्तो नीचाश्रयं करोति? चक्रवर्त्याश्रये विद्यमाने को हि मूढो ग्रामाधिपं सेवेत? । अपि च । यद्व्याख्यातम् अनुदात्त-स्वरः उदात्तादुत्पद्यते [इति] एतद् दृष्टान्तं ह्रस्वदीर्घविशिष्टे कम्पलक्षणे स्वरे
19 विलोक्यम् । तत्कम्पस्वरूपं शिक्षाकारैः साधूक्तम् । तद्यथा —

4. R. om. अस्यार्थः.

5. BP. अवसंहार्यत्वात्; R. अवधार्यत्वात् for असंहार्यत्वात्.

6. R. दुस्साध्यतया for दुर्घटत्वात् तथा.

7. BP. °भावत्वप्रयोग° for °भावाच्च प्रयोग°; R. om. च; BPR. तत्कर्तृभिः for तैर्गानकर्तृभिः.

9. B. °विशन्ति for °दिशन्ति; R. om. यज्ञे ... येषां ते । *see* CN.

14. प्रमाणम्. *see* CN.

15. BV. °लोकं, P. °लोके for °लोक°.

18. R. °दृष्टान्तः for दृष्टान्तं.

19. R. विलोक्य: for विलोक्यम्.

**पूर्वाङ्गेण हतं पूर्वं पराङ्गेण तु धारितम् ।**
**व्यञ्जनेन द्विधा भिन्नः स्वरो भीतस्तु कम्पते ॥**

(लो. शि. १. ४.)

इति । तथा च वचनान्तरमपि —

**त्रयो दीर्घास्तु विज्ञेया ये च संध्यक्षरेषु वै ।** 5
**मन्या पथ्या न इन्द्राभ्याश्शेषा ह्रस्वाः प्रकीर्तिताः ॥**

(ना. शि. २. २. ३)

इति मन्येति – **भद्रा वस्त्रा समन्या ३** (सा. १४००), **ऋतस्य पथ्या ३** (सा. १५८७), **मा न इन्द्राभ्या ३ दिशः** (सा १२८) [इति] अथ संध्यक्षरस्य(रेषु ?), **संवेशनस्तन्वे ३** (सा. ६५) **उपत्वाजुह्वो ३** 10 **मम** (सा. १५४२) इति [ च ] दीर्घोदाहरणानि । अथ ह्रस्वस्य – **पाह्य ३ त** (सा. ३६), **क ३ स्य वृषभो युवा** (सा. १४२) **ख३र्नांश्शुः** (सा. ?) इत्येवमादीनि । एवं प्रकृतिविकृतिविचारे प्रकृतिरेव सर्वत्राश्रयणीयेति सर्वशास्त्र-सिद्धान्तः । एवं वृद्धावृद्धकृष्टाकृष्टविचारे प्राप्ते छन्दोगानव्यतिरिक्तऋग्वेदादि-सकलशाखासहितस्य वेदचतुष्टयस्य साधारणौ अवृद्धाकृष्टावेव प्रकृतिभूतावाश्रय- 15 णीयौ । **अनादेशे प्रकृतिःप्रत्ययात्** (**प्रत्येतव्या** ?) इति न्यायात् । एवं प्रकृत्या-श्रयपक्षे द्वादशाहयज्ञे आर्षेयं दृष्टान्तान्तरमप्यस्ति । तत् किं दृष्टान्तम् ? उच्यते । ब्राह्मणे तावत् ज्योतिष्टोमकल्पप्रसङ्गात् प्रायणीयलक्षणादतिरात्रादारभ्य द्वादशाह-भूतस्य यज्ञस्य स्तोमसंस्थासहितानि अशेषतः अहानि क्लृप्तानि । तत्र नवमेऽह्नि – **अक्रान्** ( सा. ५२९ ) इति स्तोत्रीयः, ततः **एष देवः** (सा. १२५६) इति 20 दशर्चः, **एष धिया** (सा. १२६६) इत्यष्टर्चः, **एष उ स्य** (सा. १२७४) 21

8. P. om. मन्येति ... दिशः.

11. R. दीर्घाक्षरो॰ for दीर्घो॰.

15. BP. ॰कृष्टादेव for ॰कृष्टावेव.

17. BP. दृष्टान्तः, R. इति for दृष्टान्तम्.

19. R. om. यज्ञस्य ... ॰सहितानि: P. सोम॰ for स्तोम: BPV. तत् for तत्र.

20. BPVR add पठितः after स्तोत्रीयः.

इति षड्चः – इति एते चत्वारः पठिताः । परं तु अष्टाचत्वरिंशे स्तोमे विधीयमाने
पर्यासोऽवशिष्यते । अत्र कः पर्यास इति विचारे प्राप्ते भगवता **लाट्यायनेन**
**नवमस्य ज्योतिष्टोमः पर्यासः** (ला. श्रौ. सू. ३. ६. २६) इति वाक्यं दर्शयित्वा
प्रकृतिभूतस्य ज्योतिष्टोमस्य पर्यासलक्षणम् – **पवमानस्य ते कवे** (सा. ८५७)
5 इति विशिष्टं तृचं परिकल्प्य अष्टाचत्वारिंशः स्तोमः संपादितः । एवंविधान्य-
न्यान्यथार्थेयाणि प्रमाणानि सन्ति । परं तु ग्रन्थगौरवभयान्नोदाह्रियन्ते । एवं-
विधश्रुतिस्मृतिमूलविज्ञापकवाक्यगोलकप्रमाणात् अन्येष्वपि ताल्व्यप्रकृत्यायि-
भावादिष्वष्टादशसु भावेषु महत् (ति?) संशये प्राप्ते सर्वत्र प्रकृतिरेवाश्रयणीया ।
तद्यथा – प्रकृत्यायिभावसंशये प्रकृत्याश्रये न दोषः । संधिवत्पदविद्विचारे
10 संध्यध्ययने संधिवत्, विरते पदवत् । ऋवर्णाभावविषये ऋवर्णः प्रकृतिः ।
अनुस्वाररेफव्यञ्जनानां लोपालोपसंशये प्राप्ते लोपादलोपो न्याय्यतरः । एवं-
शेषेऽपि वेदितव्यम् । यदुक्तम् – **उदात्तानुदात्तयोरनुदात्तं सेवेत** [इति]
अत्र उदात्ते विधीयमाने उक्तात् कदाचिद्विपरीतःस्वरितः स्यात्तदा लाङ्गलश्रुति-
पर्यालोचनया न विरोधः स्यात् । **वृद्धावृद्धयोः कृष्टाकृष्टयोरप्येवमेव** वेदि-
15 तव्यम् । अथ एतद्विधिना कृतं गानं तेषां संशयप्राप्तानां गानकर्तृणां
16 **स्तोत्रीयतमं भवति** । स्तोत्रीयतममित्येतद्वाक्यं पूर्ववद्व्याख्येयम् । इह इयं

---

1. BPVR. इत्येतत् प्रभृतयश्चत्वारः षड्चः (V°चाः) पठिताः for इति षड्चः ... पठिताः *see* CN.

2. R. पर्यायो° for पर्यासो°; R. पर्याय° for पर्यास°.

3, 4. R. पर्याय° for पर्यास°.

5. R. विशिष्टामृचं for विशिष्टं तृचं.

6. BP. प्रमाणमिति for प्रमाणानि सन्ति.

10. PR. °ध्ययनं, B. °ध्ययन° for °ध्ययने; R. om. संधिवत् ... पदवत्; P. इतरे for विरते.

11. R. om. अनुस्वार° ... कृष्टाकृष्टयोरपि.

12. BP. विशेषे for शेषे.

13. BP. उक्तवत् for उक्तात्; P. °स्वरितस्यात्र तदा for °स्वरितः स्यात्तदा

14. R. om. एव.

15. R. om. अथ ... पूर्ववद्व्याख्येयम्. (l. 14)

सामवेदसंहिता सप्तस्वरविशिष्टा साङ्गोपाङ्गा दर्शिता। पुनः स्तोत्रगतसामसु प्रस्तावादिविशेषगुणैः सम्यक् प्रदर्शिता। सेयं किंविशिष्टाय शिष्याय पात्रभूताय देयेत्याशङ्क्य ऋक्स्वरूपा श्रुतिः सम्यगाह —

**विद्या ह वै ब्राह्मणमाजगाम तवाहमस्मि। त्वं मा पालय-स्वानर्हते मानिने नैव मादाः। गोपाय मा। श्रेयसी तेऽहमस्मि॥ ९॥** 5

**विद्येति**। पूर्वस्मिन् कस्मिंश्चित् कल्पोदयसमये इयं चतुर्वेदस्वरूपा **विद्या** सृष्टिकर्तृब्रह्ममुखेभ्यः निःसृता सती अनाश्रयभूता विष्णुस्वरूपं **ब्राह्मणमा-जगाम**। **ह वै** इति निपातद्वयं निश्चयार्थम्। निश्चयेन ब्राह्मणशरणं गतवती। तच्छरणं प्राप्य इतिवाक्यमुवाच – हे विष्णुस्वरूपिन् ब्राह्मण **तवाहमस्मि**। भवच्छरणमागतास्मि। **मा** इति मां **त्वं पालयस्व**। किं च **अनर्हते** अयोग्याय 10 अपात्रभूताय शिष्याय। पुनः **मानिने** स्वाभिमानिने शिष्याय। **मा** इति मां **नैव अदाः**। मा ददस्व। अपात्रभूतायाहं न देयेत्यर्थः। **मा** इति मां स्वात्मन्येव **गोपाय** रक्ष। पररक्षणे मम किं प्रयोजनमित्याशङ्क्याह – **श्रेयसी तेऽहमस्मि** इति। भवता अहं रक्षिता सती **ते** तुभ्यं **श्रेयस्यस्मि**। श्रेयःपदार्थं दायिनी भविष्यामि। अतो रक्षस्वैव ॥ ९ ॥ 15

अथ यावज्जीवं पात्रभूतः शिष्यो न प्राप्यते। तदा यस्मै कस्मै[चिद्] देया। उत न देया। इत्याशङ्क्याह --

**विद्यया सार्धं म्रियेत। न विद्यामूषरे वपेत्॥ १०॥**

**विद्ययेति**। अयमर्थः। यावज्जीवमपि पात्रभूतः शिष्यो न प्राप्यते तदा **विद्यया सार्धं म्रियेत**। विद्यया सार्धं मर्तव्यम्। **ऊषरे न वपेत्**। **ऊषरे** अपात्रभूते 20 **नोप्या**। कुतः? विद्यया सह मरणे ऊर्ध्वलोकमपि गन्तव्यम्। यथा गृहे रक्षितः व्रीह्यादिनानाधान्यसमूहः पुत्रपौत्रादिप्रजानाम् अतिथिभिक्षुकाणां च 22

---

5, 14. PR. श्रेयसे for श्रेयसी *see* CN.

15. P. श्रेयसे अस्मि for श्रेयस्यस्मि; R. रक्ष for रक्षस्व and om. एव.

16. P. कस्मै एव, V. कस्मै च for कस्मै चिद्.

20. R. om. विद्यया सार्धं म्रियेत.

21. BV. न-ओप्या for नोप्या.

उपभोगार्थं भवति; ऊषरभूम्यां न्युप्तः खलु विनश्यत्येव; तथा इदं विद्यालक्षणं बीजं स्वात्मस्वरूपे गृहे रक्षितम् ऐहिकामुष्मिकफलदायकं भवति। ऊषरे अप्रशस्तशिष्ये न्युप्तं विनश्यति। अधोलोकप्रापकं भवतीत्ययमाशयः ॥ १० ॥

अथ विद्यादानविषये पात्रं निरूपयति —

5 **ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियो विद्यया वा विद्यां यः प्राह तानि तीर्थानि षण्ममेति ॥ ११ ॥**

**ब्रह्मचारीति**। सैव चतुर्वेदस्वरूपा विद्या पात्रस्वरूपं शिष्यमुद्दिश्य पुनस्तं ब्राह्मणं प्रत्युवाच। **तानि** एतानि **मम तीर्थानि** मम निवासस्थानानि। तानि कानि? **ब्रह्मचारी** ब्रह्मणि चरतीति ब्रह्मचारी। अथवा। ब्रह्मचर्यविधिना
10 आचार्यकुले सर्वगस्य आचार्यस्य शश्वदाज्ञां परिपालयन् सन् सावित्रादि-महानाम्नीपर्यन्तानि व्रतानि चरतीति ब्रह्मचारी। पुनः **धनदायी**। आचार्याय धनं देयम् अस्यास्तीति धनदायी। आचार्येप्सितधनदानशील इत्यर्थः। **मेधावी** मेधा प्रज्ञा विद्यते यस्मिन् असौ मेधावी। अधीतं कदाचिदपि न विस्मरतीत्यर्थः। अथवा। आचार्येण सुखेनाध्यापितं [यः] शीघ्रं सुखेनाधीते सोऽपि
15 मेधावी। पुनः स एव **श्रोत्रियः**। स्वकाले स्नानसंध्याजपहोमाद्याचारवान्। पुनः स एव **प्रियः**। आचार्यहिते रत इत्यर्थः। पुनः यः **विद्यया विद्यां प्राह**। अस्य वाक्यस्यायमर्थः। गुर्वन्तरप्राप्तां विद्यां नूतनगुरवे दत्त्वा तद्गुर्वध्यापितां विद्यां यः प्राह, अधीते सोऽपि मम पात्रम्। अनेन वाक्ये-नेदमुक्तं भवति। ब्रह्मचर्यादिषड्गुणविशिष्टाय तीर्थपात्रभूताय मन्निवासयोग्याय
20 अहं देयेति सिद्धार्थः। श्रुत्यन्तरमपि – **विद्या ह वै ब्राह्मणमाजगाम**।

---

1. PR. °भूम्याद्युप्तं for भूम्यां न्युप्तः.
9. B. कति for कानि.
10. PR. सर्वज्ञस्य for सर्वगस्य.
13. PV. विस्मारयति for विस्मरति.
17. BP. °प्राप्त° for °प्राप्तां.
18. PR. om. गुरु; R. om. अनेन ... भवति.
20. B. adds एतद् before ब्रह्म°.

**गोपाय मा शेवधिष्टेऽहमस्मि । असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम्** ॥ (निरुक्त २. १. ४.) इति । अस्मिन् विद्याविषय-पात्रनिरूपणे ऋषिवाक्यमपि दृष्टमस्ति —

**कृतज्ञाद्रोहिमेधाविशुचिकल्यानसूयकाः ।**
**अध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदाः ॥** 5

(या. स्मृ. १. २८)

इत्यादिबहून्यपि वचनानि सन्ति । ग्रन्थगौरवभयान्नोदाह्रियन्ते ॥ ११ ॥

इह अनया श्रुत्या ब्रह्मचर्यादिषड्गुणविशिष्टं पात्रं निरूप्य अतः परं गुणोत्तमैर्विद्यानिधिं गुरुं प्रशंसति —

**अथैष आर्चिको निगदो भवति ॥ १२ ॥** 10

**अथेति** । अयमर्थः । विद्यादानस्य पात्रनिरूपणे या श्रुतिर्दर्शिता किं तावती एव इति न । **अथ** अपि च **एष** वक्ष्यमाणः **आर्चिको निगदो** भवति । ऋक्-संबन्धी आर्चिकः । निगद्यते ज्ञानमनेनेति निगदः । अथवा निर्गतः अविद्यालक्षणो गदो व्याधिरस्मात् निगदः ॥ १२ ॥

सोऽयं क इत्याशङ्कायामाह — 15

**य आतृणोत्यवितथेन कर्णावतृसं कुर्वन्नमृतं संप्रयच्छंस्तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत् कतमच्च नाह ॥ १३ ॥**

**य इति । यो** गुरुः उक्तलक्षणस्य शिष्यस्य अविद्यालक्षणेन तमसा कश्मलेन आपूर्णौ **कर्णौ आतृणोति** निर्मलौ करोति । केन? **अवितथेन** । विद्या-स्वरूपेण कृतेन सत्येन । अथवा । अवितथेनेति वेधनयोग्यं लोहादिरचितं 20

---

4. P. °कल्याणसूचकाः, VR. °कल्पान° for °कल्यान°.

5. V. शक्तप्रज्ञान, BP. शक्ताप्रज्ञान for शक्ताप्तज्ञान°.

12. R. अपि तु for अथ अपि च.

19. P. आपूर्ण, for आपूर्णौ; BPR. om. कर्णौ; P. निर्मलं; R. निर्मली° for निर्मलौ.

20. BP. कृतसत्त्वेन for कृतेन सत्येन; R. om. कृतेन सत्येन.

निकृन्तनसंज्ञं खनित्रम् । तद्विना निर्मलीभूतौ करोति । किं कुर्वन्? **अतृप्तं कुर्वन्** । तृप्तं महत् कष्टम् । तदनुत्पादयन् । किंच । **अमृतं संप्रयच्छन्** । अयं भावः । कर्णद्वयस्य (°द्वये ?) विद्योपसिञ्चने[न] **अदुःखं कुर्वन्निति** वाक्ये[न] नोपजायते दुःखम् [इत्येव तात्पर्यं भवति] । किमेतावदेव फलम्

5 इति न । किं तर्हि? कर्णद्वये अमृतस्य संप्रदानं कुर्वन् आतृणोति । एतद्गुण-विशिष्टः अमृतदाता गुरुः केन महापदार्थेन समो मान्य इत्याशङ्क्याह – **तं मन्येत पितरं मातरं च** । एतदुक्तं भवति – जनकजननीसमो मान्य इत्यर्थः । किंच । तस्मै गुर्वर्थे यत्किंचित् पुत्रशिष्यपश्वादिहितकरं वस्तु प्रवृत्तमस्ति तत् कदाचिदपि **न द्रुह्येत्** । तस्मै इति चतुर्थ्यन्तपदस्यायं भावः । किंच । **कतमच्च नाह** ।

10 कदाचिदपि गुरुदत्तां विद्यां पठन् सन् गुर्वनुज्ञातः आचार्यादेशं विना **नाह** । किंचिदपि शुभाशुभं वाक्यं न ब्रूत इत्यर्थः । तथा च श्रुत्यन्तरम् —

> **य आतृणत्त्यवितथेन कर्णावदुःखं कुर्वन्नमृतं संप्रयच्छन् ।**
> **तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत् कतमच्च नाह ॥**
>
> **अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा ।**
>
> 15 **यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत् ॥**
>
> (नि. २. १. ४)

इति अवितथेनेत्यत्रापि श्रुत्यन्तरम् —

> **ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ।**

इति ॥ १३ ॥ (ऋ. वे. ४.२३.८)

20 **इह गुरुसंमानपूजालक्षणां श्रुतिं दर्शयित्वा अथ उत्तरया श्रुत्या अपात्र-**

21 शिष्याध्यापने दोषं दर्शयति —

---

1. R. निर्मलौ कर्णौ for निर्मलीभूतौ.
2. P. अवतृप्तं for तृप्तं.
3. R. om. अयं भावः ... किं तर्हि?; B. पूर्ण° for कर्ण°.
4. B. किं च तावद् for किमेतावद्.
6. P. °दान° for °दाता; B. महत्° for महा°; R. om. महा°.
8. V. गुर्वर्थं for गुर्वर्थे.
11. BP. श्रुत्यन्तरे for श्रुत्यन्तरम्.
21. B. °ध्यापन° for °ध्यापने.

**अग्निरिव कक्षं दहति ब्रह्मपृष्ठमनादृतम् ॥ १४ ॥**

**अग्निरि**ति। अनादृतं विद्यालक्षणं **ब्रह्मपृष्ठम्** अधीतमध्यापितं च सत् उभयोः शिष्याचार्ययोः वंशं **दहति** । कं क इव? **अग्निः कक्षमिव** । यथा वंशादेवोत्पन्नः अग्निः शबलं कक्षमुभयतः समुद्भूतः वृक्षतृणादिकमपि सर्वं अरण्ये **दहति** ॥ १४ ॥ 5

अतः सर्वथा आचार्यभक्तिरहितः आलस्यादिदोषवांश्च शिष्यो नादरणीय इति विधित्सुराह —

**तस्मै ब्रह्म न प्रब्रूयात् ॥ १५ ॥**

**तस्मा** इति। अनादरेण योऽधीते **तस्मै** शिष्याय विद्यालक्षणं **ब्रह्म न प्रब्रूयात्**। प्रेत्युपसर्गस्यायं भावः। एवं विधायापि शरणागताय शिष्याय यादृशस्तस्य प्रभावः तं परीक्ष्य किंचित् किंचित् ब्रूयादिति। किमालस्यादियुक्तमेव नाध्यापयेत्? इति न ॥ १५ ॥ 10

किंच —

**शक्यमानमकुर्वते ॥ १६ ॥**

**शक्यमान**मिति। आचार्योक्तं कर्तुं समर्थोऽपि यो न करोति तस्मा अपि विद्यालक्षणं **ब्रह्म न प्रब्रूयात्** ॥ १६ ॥ 15

अथ यावज्जीवपर्यन्तमुक्तलक्षणे शिष्ये अविद्यमाने अनारोपितायां विद्यायामाचार्यस्य कथं विद्यासिद्धिर्भवतीति आशङ्क्याह —

**अति संसिद्धिमपि गच्छेत विद्यया सह ॥ १७ ॥** 19

---

1. MY. अनावृतं for अनादृतं.
4. V. सकलं for शबलं; B. समुद्भूत° for समुद्भूतः.
10. B. ब्रूयात् for प्रब्रूयात्; BP. शरणायोता इति नष्टा for शरणागताय; P. om. शिष्याय.
12. R. om. इति.
13. R. किंतु for किं च.
17. P. अथवा for अथ; R. om. अथ; R. °ज्जीवं for °ज्जीवपर्यन्तं.
19. R. om. अति°; MY. गच्छति for गच्छेत.

अतीति । अयमर्थः । उक्तलक्षणे शिष्ये अविद्यमाने अनारोपितायां विद्यायामपि यदि म्रियेत तदा ब्रह्मदानेन या सिद्धिरुक्ता ब्रह्मयज्ञेनैवं तादृशीं सिद्धिम् अति आक्रम्य गच्छेत । ब्रह्मलोकं प्राप्नोतीत्यर्थः । ब्रह्मयज्ञब्रह्मदानयोः फलं कात्यायनेनोक्तम् । तद्यथा —

5 ऋचः पठन् मधुपयःकुल्याभिस्तर्पयेत् सुरान् ।
घृतामृतौघकुल्याभिर्यजूंष्यपि पठन् सदा ॥

सामान्यपि पठन् सोमघृतकुल्याभिरन्वहम् ।
मेदःकुल्याभिरपि च अथर्वाङ्गिरसः पठन् ॥

मांसक्षीरौदनमधुकुल्याभिस्तर्पयेत् पठन् ।
10 वाकोवाक्यपुराणानि इतिहासानि चान्वहम् ॥

ऋगादीनामन्यतममेतेषां शक्तितोऽन्वहम् ।
पठन् मध्वाज्यकुल्याभिः पितॄनपि च तर्पयेत् ॥

ते तृप्तास्तर्पयन्त्येनं जीवन्तं प्रेतमेव वा ।
कामचारी च भवति सर्वेषु सुरसद्मसु ॥

15 गुर्वप्येनो न तं स्पृशेत् पङ्क्तिं चैव पुनाति सः ।
यं यं क्रतुं च पठति फलभाक् तस्य तस्य च ॥

(का. स्मृ. १४. ९-१४)

18 इति ब्रह्मयज्ञफलं दर्शयित्वा अथ ब्रह्मदानफलं दर्शयति स एव —

---

1. R. om. अयमर्थः.
3. R. om. अति आक्रम्य; PR. गच्छन्, BV. गच्छेत् for गच्छेत.
4. R. om. तद्.
10. PR. °वाक्यं for °वाक्य°
13. P. च for वा.
15. BV. सं for तं.
16. R. चिकीर्षन् for क्रतुं च.
18. B. अद्य for अथ.

वसुपूर्णां वसुमतीं विदानफलमाप्नुयात् ।
ब्रह्मयज्ञादपि ब्रह्मदानमेवातिरिच्यते ॥

इति ॥ १७ ॥ (का. स्मृ. १४. १५)

उक्तार्थमेव निश्चयीकरोति —

**ज्ञानवान् न त्वेनामसते दद्यात् ॥ १८ ॥** 5

**ज्ञानवानिति** । अयमर्थः । यतः अनर्हशिष्याध्यापने वंशदहनाख्यो दोषो दर्शितः अथ च विद्यया सह मरणे ब्रह्मप्राप्तिलक्षणा सिद्धिरुक्ता अतः एवं **ज्ञानवान्** आचार्यः **असते** असच्छिष्याय **एनां** ब्रह्मलक्षणां विद्यां **न दद्यात्** । तथा च **रहस्योपनिषत् — तद्धैतद्ब्रह्मा प्रजापतय उवाच । प्रजापतिर्मनवे मनुः प्रजाभ्यः तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ॥** 10 **इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्याय वान्तेवासिने ॥ नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इति । एतदेव ततो भूयः ॥** (छा. उ. ३.११.४-६) इति ॥ १८ ॥

अत्र असच्छिष्यविद्यादाने महादोषं दर्शयित्वा अथ सच्छिष्याध्यापनं 15 द्रढयति —

**सतश्च न विमानयेत् ॥ १९ ॥**

**सत** इति । **सतः** सच्छिष्यान् ब्रह्मचर्यादिगुणयुक्तान् अनिशमाचार्यहिते रतांश्च **न विमानयेत्** । न विगणयेत् । अध्यापयेदित्यर्थः ॥ १९ ॥ 19

---

6. V. अनर्ह° for अतदर्ह.

7. BPR. तथा for अथ.

11. चा° for वा°.

13. B. om. इति ... भूयः.

15. BPV. महद्° for महा°; R. om. महा°; R. om. अथ.

19. R. om. न विगणयेत्.

इह शिष्यस्य अर्हताम् अनर्हतां च प्रतिपाद्य ततः प्रकारान्तरेणापरया श्रुत्या विद्याधिकारिणं निरूपयति —

**अथैता वेदस्याष्टावुपनिषदो भवन्ति । वित्तिश्चोपस्तवश्च दमश्च श्रद्धा च संप्रश्नश्चानाकाशीकरणं च योगश्चाचार्यशुश्रूषा**
5 **चेति ॥ २० ॥**

**अथैता** इति । अथ पूर्वोक्तार्थवेदाध्ययनविधिप्राप्तये एताः प्रोच्यमानाः अष्टसंख्याकाः **उपनिषदः** अधिकारिविशेषणानि उपनिषद्भिः प्रतिपादितानि । तानि च – **वित्तिश्च** विद्यते अनयेति वित्तिः । प्रज्ञेत्यर्थः । प्रज्ञावानध्याप्य इत्याशयः । अथवा वित्तमेव वित्तिः । आचार्यप्रार्थिता दक्षिणेत्यर्थः । **उपस्तवश्च** ।
10 आचार्यस्य स्तवनम् उपस्तवः । **दमश्च** । सावित्रादिमहानाम्न्यन्तैः व्रतैः शरीरदमः । **श्रद्धा च** । विद्याध्ययनश्रद्धा आचार्यभक्तिश्रद्धा च । यद्यपि श्रद्धा प्रसिद्धा ततोऽ(था?)पि निर्वचनीया । अत्र किं निर्वचनम्? उच्यते तावत् । **निघण्टुकारैः 'बट् श्रत् सत्रा** (नि. ३. १०) इत्येतस्मिन् सत्यनामधेयाधिकरणे श्रच्छब्द उदाहृतः । अतः श्रच्छब्देन सत्यमुच्यते । श्रत्
15 सत्यं दधातीति श्रद्धा । अत्र उभयप्रकारा श्रद्धा आचार्यभक्तिसंबन्धिनी अध्ययन-

---

3. BP. (ए)तावदस्य for (ए)ता वेदस्य; My. °तपश्च for °स्तवश्च.

4. MA. मदश्च for दमश्च; M. संपातं for संप्रश्नः.

6. PR. om. °(अ)र्थ°; PR. om. °विधि°.

7. BPV. उपनिषद्भिः प्रतिपादिताः अधिकारिणो वर्तन्ते for आधिकारि° ... प्रतिपादितानि; BPV. om. तानि च.

8. R. om. इत्याशयः.

11. R. वेदा° for विद्या°.

12. R. om. अत्र किं ... तावत्.

13. R. तत्र निघण्टुकारः for निघण्टुकारैः; BPR. om. बट् श्रत् सत्रा ... उच्यते.

14. R. adds यत् before श्रत्,

15. BP. श्रद्दधाति, R. तद्दधाति for दधाति.

संबन्धिनी च। यतः श्रद्धापुरःसरमनुष्ठितमेवाध्ययनादि सर्वं सत्कर्म मनसि अवधारयितुं शक्यते। अथ चात्मसंस्काराय प्रयतते च। अतः श्रद्धापुरः-सरमेव अध्ययनादि सर्वमनुष्ठेयमिति सिद्धोऽर्थः। तथा च **रहस्योपनिषद्क्-श्रुतिश्च – यदा वै श्रद्धात्यथ मनुते नाश्रद्दधन्मनुते। श्रद्दधदेव मनुते। श्रद्धा त्वेव विजिज्ञासितव्या॥** (छा. उ. ७. १९. १) 5

इति। तथा —

**श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः।**
**श्रद्धां भगस्य मूर्द्धनि वचसा वेदयामसि॥**

(ऋ. वे. १०. १५१. १)

इति। अतो गुरुणापि श्रद्धावानेव अध्याप्यः। **संप्रश्नश्च**। अधीतस्य 10 संशयविच्छेदार्थं सम्यक् प्रश्नः संप्रश्नः। अथवा अधीतस्य अर्थविज्ञानार्थं संप्रश्नः। यतः अज्ञातार्थवेदाध्ययने श्रुत्यैव महान् दोषो दर्शितः। विज्ञाताध्ययने महत् फलमुक्तं च। अतो वेदज्ञानार्थस्य अवश्यं संप्रश्नः कर्तव्यः। तथा च —

**स्थाणुरयं भारहारः किलाभू-**
**दधीत्य वेदं न विजानाति योऽर्थम्।** 15
**योऽर्थज्ञ इत्सकलं भद्रमश्नुते**
**नाकमेति ज्ञानविधूतपाप्मा॥**

**यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते।**
**अनग्नाविव शुष्केन्धो न तज्ज्वलति कर्हिचित्॥**

(नि. १. ६. १८) 20

---

1. R. om. सत्कर्म.
4. BPR. om. श्रुतिश्च.
6. BPR. om. तथा श्रद्धया ... वेदयामसि। इति.
12. R. °वेदाध्ययनस्य for °वेदाध्ययने.
18. B. गीतम्, R. अधीतम् for गृहीतम्.
19. RP. शुष्कैधो° for शुष्केन्धो°.

इति । **अनाकाशीकरणं च** । प्राप्तायाः विद्यायाः असच्छिष्याय अप्रकाशीकरणम् । **योगः** प्राप्तया विद्यया सह सदैव स्थातव्यमित्ययमाशयः । तथा च स्मरणम् —

**वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ।**
**तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ।।**

(दक्षस्मृतिः २. ३४)

इति । अनेन वाक्येनेदमुक्तं भवति – विचारपुरःसरं सदैव तद् अभ्यसेदित्यर्थः । अन्यथा विस्मृतिर्भवति । विस्मृतौ तु महान् दोषो दृष्टः । तथा च **योगीश्वरः** —

**गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्वधः ।**
**ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् ।।**

(या. स्मृ. ३. २२८)

इति । **आचार्यशुश्रूषा च** । आचार्यवाक्यपरिपालनमेव आचार्य-शुश्रूषा । यतः अन्यास्वप्युपनिषत्सु अयमेवार्थः प्रतिपादितः । तथा च **सत्यकामगौत**मविषये – **तमुपनीय कृशानामबलानां चतुःशता गा निराकृत्योवाचेमाः सोम्यानुसंव्रजेति । ता अभिप्रस्थापयन् उवाच । नासहस्रेणावर्तेयेति । स ह वर्षगणं प्रोवास । ता यदा सहस्रं संपेदुः** (छा. उ. ४. ४. ५) इत्यादि । तथा एवमेवेहाचार्यवान् पुरुषो वेदेति । तथा **सत्यकामोपकोसल**विषये – **उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास । तस्य ह द्वादश वर्षाण्यग्नीन् परिचचार ।।** (छा. उ. ४. १०. १) इति ।। २० ।।

---

1. BPR. प्रायः, V. अप्राप्तायाः for प्राप्तायाः *see* CN.

7. R. एव सदा, P. एव तद्दानं तदा, B. दैवतदानं, V. सदैव तदा for सदैव तद्.

8. R. om. अन्यथा ... दृष्टः.

18. PR. om. तथा ... वेदेति.

19. R. om. सत्यकामोपकोसलविषये.

इहानया श्रुत्या शिष्यार्हतामनर्हतां [तथैव] ब्रह्मयज्ञं ब्रह्मदानं च निरूप्य अथ वेदस्य छन्दोदैवतादिविज्ञानपुरःसरमध्ययनं निरूपयति —

**तदेतत्कौकुरुण्डेर्वचनं वेदयन्ते त्रिभिः पर्यायैः यः संपूर्णं पश्यति । छन्दस्तो देवतातो निगमत इति स मन्त्रदर्शी भवति ॥ २१ ॥** 5

तदिति । **तदेतद्** अध्ययनम् अधिकृतं तदुद्दिश्य पुराणा आद्या आचार्याः **कौकुरुण्डेर्**महर्षेः **वचनम्** उपदेशं **वेदयन्ते** विज्ञाप्यन्ते । तान् वेदाध्ययनकर्तॄन् प्रतीति वाक्यशेषः । किमित्यपेक्षायामाह — **यः** अध्ययनकर्ता **त्रिभिः** प्रकारैः (पर्यायैः?) वेदोक्तं कर्म **संपूर्णं** समृद्धं **पश्यति स** एवाध्ययनकर्मकर्ता **मन्त्रदर्शी भवति** । संप्रोक्तफलवान् भवतीत्यर्थः । तैः कैः त्रिभिः पर्यायैः? 10 **छन्दस्तः** छन्दां[सि] वेदाः तैर्यथोक्तैः वेदमन्त्रैः । **देवतातः** । देवता मन्त्रार्थभूता । तत्स्वरूपविज्ञानात् समृद्धं पश्यति । **निगमत** इति । निगमो मन्त्रार्थः । तद्विज्ञानात् । अथवार्थान्तरम् — **छन्दस्त** इति । छन्दांसि गायत्र्यादीनि । तेषामुत्पत्तिवर्णदैवतगोत्रज्ञानात् समृद्धं पश्यति । **देवतात** इति । स्तुत्येज्या देवता प्रधानभूता । तत्स्वरूपविज्ञानात् । **निगमत** इति ऋषि- 15 मन्त्रार्थब्राह्मणादिविज्ञानात् । किमुक्तं भवति? उच्यते । यः ब्राह्मणः मन्त्रच्छन्दोदैवतार्षब्राह्मणमन्त्रार्थान् विदित्वा वेदोक्तं कर्म करोति तस्यैव समृद्धं कर्म भवतीति सिद्धार्थः । तथा च ब्राह्मणान्तरम् — **यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा** 19

---

1. BPV. add च निरूप्य after °नर्हतां; R. om. ब्रह्मयज्ञं ब्रह्मदानं; P. °प्रदानं for °दानं.

7. BPR. °ध्यापन° for °ध्ययन°.

8. BP. किंच च, V, किं च व° for किम्.

9. BV. संपश्यति for पश्यति.

11. PR. छन्दो for छन्दांसि.

12. PR. om. समृद्धं … तद्विज्ञानात्.

14. PR. समृद्धि for समृद्धं.

15. PR. देवताः प्रधानभूताः for देवता प्रधानभूता.

स्थाणुं वर्च्छति गर्तं वा पद्यति प्र वा मीयते पापीयान् भवति । यातयामान्यस्य छन्दांसि भवन्ति अथ यो मन्त्रे मन्त्रे वेद सर्वमायुरेति श्रेयान् भवति । अयातयामान्यस्य च्छन्दांसि भवन्ति । तस्मादेतानि मन्त्रे मन्त्रे विद्यात् ।। (आ. ब्रा. १.१. ६) इति छन्दोगपरिशिष्टेऽपि —

5 पदं पादं विधां मात्रां छन्दो विज्ञाय दैवतम् ।
आर्षं च ब्राह्मणं चैव ततः साम प्रयोजयेत् ।।

इति ।। २१ ।।

अथ य एतैरसंपूर्णं पश्यति स गाथादर्शी भवति ।। २२ ।।

अथेति । यश्च एतैः पूर्वोक्तैः छन्दोदैवतादिभिः असंपूर्णं न्यूनं पश्यति 10 स गाथादर्शी भवति । दारवीवीणोत्पन्नगानप्रयोगीत्यर्थः । तत्र तु दैवतार्षब्राह्मणादि न संभवति । एतदविज्ञानस्य निन्दावाक्यं पूर्वव्याख्याने दर्शितमेवास्ति ।। २२ ।।

अत्र सकलवेदाध्ययनविधिमुक्त्वा अथ यदुक्तं तत्सर्वमुपसंहरति —

ते खल्विम एवमेव पूर्वैराचार्यैः प्रोक्ता धर्माः ।। २३ ।।

त इति । अयमर्थः । अस्मिन् ब्राह्मणे य इमे अध्ययनाध्यापनविधिधर्मा 15 उक्ताः ते सर्वे धर्माः पूर्वैः आचार्यैः पुराणैः सकलकल्पसाधारणैः आद्यैः

---

2. PR. om. अथ यो° ... विद्यात्.

5. B. विचय° for विज्ञाय.

9. BPV. न्यूनातिरिक्तं for न्यूनं.

11. BP. यद् for एतद्; R. om. एतद° ... °मेवास्ति; P: °व्याख्यानेन for °व्याख्याने.

13. उक्तम् for यदुक्तं तत्सर्वम्.

14. R. om. एवम्.

15. BPR. om. य°.

16. R. om. धर्माः; BV. om. आचार्यैः.

व्यासनारदकपिलमनुकश्यपदत्तात्रेयादिभिः जगदीश्वरस्वरूपैः तदध्ययनाधिकारिभिः **खलु प्रोक्ताः** । विस्तरतो दर्शिता इत्ययमाशयः ॥ २३ ॥

इति सकलवेदार्थप्रकाशकस्वतःसिद्धचतुर्दशविद्याकुशलद्विजराज-
श्रीवंशभूषणभट्ट-श्रीविष्ण्वात्मजकृतौ छान्दोग्यसंहितोप-
निषद्भाष्ये सामवेदस्वरूपवेदाध्ययनवर्णने 5
तृतीयः खण्डः समाप्तः ॥ ३ ॥ 6

---

1. R. om. जगद्; PR. तदा° for तद°.

4. BP. छान्दग्ये for छान्दोग्य°.

5. P. °स्वरूपे for °स्वरूप°; R. om. सामवेदस्वरूप.

# चतुर्थः खण्डः

इह पूर्वस्मिन्नधिकरणे सकलसामवेदस्वरूपवर्णनविचाराः प्रतिपादिताः। तथा विद्यापात्रापात्रस्वरूपं च निरूपितम्। अतः परं गुरुदक्षिणाप्रसङ्गेन अन्यदपि पयोव्रतादितपश्चरणादिफलं निरूपयति —

5 **दानेन सर्वान् कामान् अवाप्नोति। चिरजीवित्वं च ॥ १ ॥**

**दानेने**ति। उक्तलक्षणः शिष्यः ब्रह्मचर्यादिव्रतपालनेन गुरुसकाशात् ज्ञानपुरःसरं सविचारां विद्यामङ्गीकृत्य गुर्वीप्सितदानेनैव वेदोक्तान् **सर्वान् कामान् अवाप्नोति**। **चिरजीवित्वं** पूर्णजीवित्वं च तेनैवाप्नोति। अथवा सच्छिष्याय विद्यादानेन ईप्सितान् सर्वान् कामान् अवाप्नोति। शतायुषो भवति ॥ १ ॥

10 **ब्रह्मचारी रूपवानहिंस्र उपपद्यते ॥ २ ॥**

**ब्रह्मचारी**ति। समावर्तनस्नपनादूर्ध्वं गृह[स्थ]ाश्रमे प्रवर्तमानोऽपि स्व-दारनिरतः ऋतावेव जायोपेयी **ब्रह्मचारी** भवति। सोऽन्यजन्मनि **रूपवान्** तेजस्वी रोगादिना **अहिंस्रः उपपद्यते** उत्पद्यते। जायते इत्यर्थः ॥ २ ॥ 13

---

2. R. प्रकरणे for अधिकरणे.

4. R. °श्चरणं तत्फलं च for °श्चरणादिफलं.

7. R. स्वीकृत्य, BPV. अधिकृत्य for अङ्गीकृत्य; PR. °नैवोक्तान् for °नैव वेदोक्तान्.

8. BV. add इत्यर्थः after the first अवाप्नोति; BPR. शिष्याय for सच्छिष्याय.

9. BP. °युषं, V. °युष्यं for °युषो°.

11. BPR. om. समावर्तन°... °निरतः.

12. R. जायोपसेवी for जायोपेयी; R. om. ब्रह्म°... भवति. *see* CN; R. adds जायते after °जन्मनि.

13. R. हिंसाहितः for अहिंस्रः; R. om. जायते इत्यर्थः; BPV. om. उपपद्यते.

**स्वर्ग्यं पर्णाशनात् ॥ ३ ॥**

**स्वर्ग्य**मिति । **पर्णाशन**विधिना यो वेदमधीते सोऽन्यजन्मनि **स्वर्ग्यं** स्वर्गभवं फलं प्राप्नोति ॥ ३ ॥

**दिविचरः पयोभक्षः ॥ ४ ॥**

**दिवी**ति । पयोव्रतविधानेन यो वेदानधीते सोऽयं **दिविचरः** । सर्वेषु स्वर्गलोकेषु कामचरो भवति ॥ ४ ॥ 5

**स्थानवीरासनाद् वित्तवान् ॥ ५ ॥**

**स्थाने**ति । अस्य वाक्यस्यायमर्थः । वेदस्वीकारानन्तरम् [स्थाने] एकस्मिन् प्रदेशे वीरासनविधिना यो ब्रह्मयजनरतः तस्माद् अध्ययनलक्षणकृताद् **वीरासनात्** अन्यजन्मनि ईप्सितवित्तवान् भवति ॥ ५ ॥ 10

**पितृमातृगुरुशुश्रूषाध्यानवान्त्स्वर्गी ॥ ६ ॥**

**पितृमातृगुर्वि**ति । पितृमातृगुरुशुश्रूषायां यावज्जीवं ध्यानं विद्यते यस्य सोऽसौ जीवन्नपि **स्वर्गी** भवति । स्वर्गार्हाणि सुखानि प्राप्नोतीत्यर्थः ॥ ६ ॥

इह तपश्चरणविधिना ब्रह्मयज्ञविधानं प्रतिपाद्य अतः परं पूर्वाधिकृतामेव गुरुदक्षिणामादिशति — 15

**यः काञ्चनदाता यावानु वै रसस्तावानात्मा सः ॥ ७ ॥**

**य** इति । वेदव्रतसमावर्तनस्नपनान्ते **यः** गुरोः **काञ्चनदाता** काञ्चनं सुवर्णं ददाति **सः यावान्** यादृशः शुद्धसुवर्णस्य **रसः तावानात्मा** भवति । आदित्यान्तर्वर्ती हिरण्मयः पुरुषो भवतीत्ययमाशयः ॥ ७ ॥ 19

---

1. My. स्वर्गं for स्वर्ग्यं.
9. VR. °यज्ञ° for °यजन°.
13. R. om. सः; B. सोऽसौ । सः for सोऽसौ.
14. R. om. अतः परं.
16. AMT. om. उ.
17. BP. यः for सः.

**एष इम एव लोकाः ॥ ८ ॥**

**एष** इति। यः काञ्चनदाता सः **एषः** अयम् **इमे** भूरादयः ये **लोकाः** तत्समानो भवतीति। आदित्यवत् सर्वलोकव्यापको भवतीत्यर्थः ॥ ८ ॥

**अयं सलोकः स प्रतिष्ठित एव भवति ॥ ९ ॥**

5 **अय**मिति। पूर्वोक्तस्य फलान्तरमेव प्रतिपादयति -- **अयं** सुवर्णदाता **सलोकः** सपरिवर्गः **स प्रतिष्ठित एव भवति**। अस्मिन् प्रतिष्ठालोके भूर्लोके जीवन्नेव भूर्लोकसमानो भवतीत्ययमाशयः ॥ ९ ॥

अथ उक्तस्य हेतुं प्रतिपादयति ---

**प्रतिष्ठित इव ह्ययं लोकः ॥ १० ॥**

10 **प्रतिष्ठित** इति। यदुक्तं पूर्ववाक्ये सुवर्णदाता भूर्लोके जीवन्नेव भूर्लोकसमानो भवतीति [तत्] कुतः भवति? **हि** यतः कारणात् **अयं** भूर्लोकः सर्वेषु शास्त्रेषु प्रतिष्ठावाचकः। अतः सोऽपि प्रतिष्ठालोके **सुप्रतिष्ठित इव** भवति ॥१०॥

**अथ यदुत्तरं सा द्यौर्मूर्तिमत्सु गृहेष्वभिजायते ॥ ११ ॥**

**अथे**ति। **अथ** अनन्तरं भूर्लोकभोगानन्तरम्। भूर्लोकाद् **उत्तरम्**

15 ऊर्ध्वम्। **सा** या **द्यौः**। तस्यां दिवि **मूर्तिमत्सु** दिव्यदेहलक्षणेषु **गृहेषु अभिजायते**। आदित्यवत् सर्वदेवमयो भवतीत्यर्थः ॥ ११ ॥

**त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ॥ १२ ॥**

18 **त्रीणी**ति। सर्वज्ञाः आचार्याः **त्रीणि** दानानि सुवर्णदानादपि फलत्वेन

---

1. R. reads sutras 8 and 9 as one sutra. RS. लोका नयं for लोकाः ॥ अयं (l. 4).

2. BPR. ये इन्द्रादयः for इमे भूरादयः. *see* CN; R. om. ये and adds अयं after लोकाः.

4. RS. एव for इव; B. सुप्रति° for स प्रति°.

6. BP. स परैर्वर्गः for सपरिवर्गः; BP. सुप्रति° for स प्रति°; BPV. इव for एव; PR. भूलोक for भूर्लोक in all places.

अधिकानि आहुः । अधिकत्वेन वदन्ति । तानि कानि? पूर्वं तावद् गावः । अथ पृथ्वी । अथ सरस्वती । अतः शक्तिमान् सुवर्णदानानन्तरं तान्यपि दद्यादित्ययमाशयः ॥ १२ ॥

**नरकादुद्धरन्त्येते जपवापनदोहनादुपस्पर्शनात् ॥ १३ ॥**

**नरका**दिति । [जपादि] लक्षणफलात् एते गुरवः दातृपितॄन् **नरकादुद्धरन्ति**। सरस्वतीलक्षणदानेन अथवा पुस्तकदानेन जपलक्षणफलमभिजायते । तस्मात् जपलक्षणफलात् **उद्धरन्ति** । भूमिदानेन सकलप्राणिजीवनभूतबीजावापनरूपात् फलात् नरकस्थानुद्धरन्ति । धेनुदानेन परमतृप्तिकरसकलवररससारदोहनरूपात् फलात् **उपस्पर्शनात्** तथा तदुत्पन्नपरमपवित्रशकृन्मूत्रोपस्पर्शनात् गोसुखकारिकण्डूयनादिभक्तैश्च नरकस्थानुद्धरन्ति ॥ १३ ॥ 10

**षड्भागं करकं यः प्रयच्छत्यपिपासितश्च म्रियते सोमपश्चाभिजायते ॥ १४ ॥**

**षड्भाग**मिति । उक्तलक्षणः शिष्यः वेदाध्ययनानन्तरं गुर्वीप्सितोक्तहिरण्यगवादिदक्षिणां दत्त्वा गुर्वनुज्ञया गृहस्थाश्रमे प्रवर्तमानः सन् आर्जितस्य धनस्य **षड्भागं** षष्ठांशं गुरवे **करक**लक्षणं धनं **प्रयच्छ**ति ददाति । स इह लोके **अपिपासितः** सकलतृष्णारहितः सकलकामसंपूर्णः शतायुश्च **म्रियते** । किं च । ऊर्ध्वं **सोमपः** अमृतपः जायते । वसुरुद्रादित्यात्मको जायत इत्यर्थः । यतः **ब्राह्मणान्तरे — अथैषा चन्द्रमसः क्षयवृद्धिर्भवति** (षड्विंशब्रा. ५. ६. १) । 18

1. B. adds वा after पूर्वं.
2. B. सारस्वतः for सरस्वती; BP. तान् for तानि.
4. BPV. °स्पर्शनलक्षणात् for °स्पर्शनात् *see* CN.
5. R. om. जपादिलक्षणफलात्.
8. BPR. °रसवर° for °वररससार°.
9. R. om. तदुत्पन्न° ... °स्पर्शनात्.
15. BPR. om. धनं.

इत्येतस्मिन्नधिकरणे वसुरुद्रादित्या एव सोमपा उक्ताः । तद्यथा — **तं देवा दिव्येन पात्रेण आदित्याः प्रथमं पञ्चकलं पञ्चमीं भक्षयन्ति । तेऽन्तरिक्षेण पात्रेण रुद्रा द्वितीयं पञ्चकलं दशमीं भक्षयन्ति । ते पृथिव्या पात्रेण वसवस्तृतीयं पञ्चकलं पञ्चदशीं भक्षयन्ति** (षड्विंशब्रा. ५. ६. २)
5 इति ॥ १४ ॥

इति सकलवेदार्थप्रकाशकस्वतःसिद्धचतुर्दशविद्याकुशलद्विजराज-
श्रीवंशभूषणभट्टविष्ण्वात्मजकृतौ छान्दोग्यसंहितोपनिषद्भाष्ये
8 गुरुदक्षिणाधिकारे चतुर्थः खण्डः समाप्तः ॥ ४ ॥

---

3. P. तद्द्वितीय for रुद्रा द्वितीयं P om. ते पृथिव्या . . भक्षयन्ति.

# पञ्चमः खण्डः

इह पूर्वस्मिन्नधिकरणे सकलवेदलक्षणतद्दानलक्षणगुरुदक्षिणाविधिं निरूप्य अथ संकेतपदैः परिशेषविधिं निरूपयति । अयमुच्यमानः संकेतरूपः सर्वोऽपि कर्तृकर्मपदैः साकाङ्क्षः बह्वर्थः अतीव गूढार्थः ॥

तद्यथा — 5

**अथ हिरण्यमेवापः कनको भवति । सहस्रं लभते ॥ १ ॥**

**अथे**ति । अत्र कर्ममात्रमुद्दिष्टम् । येन पुरुषेण **हिरण्यम् आप**श्च दत्ताः स शरीरान्तरे **कनकः** आदित्यान्तर्वर्तिहिरण्यपुरुषसमानो भवति । किंच । इह जन्मनि **सहस्रम्** असंख्येयं सकलसत्कर्मसाधकं हिरण्यगवादि धनं लभते । प्राप्नोतीत्यर्थः ॥ १ ॥ 10

**अथैषा यजनीयेऽहनि सप्तच्छन्दाः ॥ २ ॥**

**अथैषे**ति । अत्रापि कर्ममात्रम् । **एषा** अधिकृता **सप्तच्छन्दा** वेदलक्षणा विद्या दर्शपूर्णमासयोः **यजनीयेऽहनि** अग्न्यादिसकलदेवतातुष्टये आज्यचरुपुरोडाशैः सदक्षिणा प्रयोक्तव्येत्ययमाशयः ॥ २ ॥

**अथैषाग्निरूप(रपि?)समाहितो भवति ॥ ३ ॥** 15

**अथैषे**ति । **अथ** फलान्तरम् । अनग्निमत्यपि द्विजे यत्र **एषा** सामलक्षणा सप्तच्छन्दा विद्यास्ति । अत अकृतेऽप्यग्न्याधाने वेदसाम(सामवेद?)जपैरेव श्रौताग्निः **समाहितो भवति** । दर्शपूर्णमासादियज्ञैर्[विना]पि इष्टं भवतीति तात्पर्यार्थः । 18

---

2. R. प्रकरणे for अधिकरणे; R. °वेददानलक्षणं for वेदलक्षणतद्दान-लक्षण..

13. V. °तृप्तये for तुष्टये.

15. A. °अथैका° for अथैषा; T. श्रीरूप° R. °ग्निरूप° for °ग्निरुप° *see* CN.

17. R. °च्छन्दोविद्या° for °च्छन्दा विद्या°.

तथा च ब्राह्मणम् — प्रथमं त्रिवर्गं नवकृत्वो नवकृत्वो गायेदेवं सदा प्रयुञ्जानोऽग्न्याधेयमवाप्नोति ॥ 'इन्द्राय पवते मदः' पवमानहवींष्येतेन कल्पेन ॥ सुवर्महाः सुवर्मया इत्येताभ्यां दर्शपूर्णमासावेतेनैव कल्पेन ॥ (सा. वि. ब्रा. १. ३. २-४) इति ॥ ३ ॥

5　**ब्रह्मचारी भैक्षं चरति निवेद्यं लभते ॥ ४ ॥**

**ब्रह्मचारी**ति । उक्तलक्षणो **ब्रह्मचारी** वेदाध्ययनं कुर्वन् सन् भिक्षां **चरति** । परं तु **निवेद्यं** गुरुनिवेदितं **भैक्षं लभते** । निन्द्याशनशङ्कानिवृत्तये गुरुवीक्षितमश्नातीत्ययं भावः ॥ ४ ॥

**तिष्ठत्यहः शेषो[ऽधःशयितो] भवति ॥ ५ ॥**

10　**तिष्ठती**ति । भिक्षाशनानन्तरम् **अहः** अह्नि गुर्वादेशपरिपालनार्थं गुरुसमीप एव तिष्ठति । किं च । **शेषो भवति** । संध्यावन्दनहोमाभिवादनादिशेषकर्मकरो भवतीत्यर्थः ॥ ५ ॥

**व्रतमिति सारस्वतम् ॥ ६ ॥**

**व्रत**मिति । अनेनोक्तविधिना यो विद्यामभ्यस्येत् तस्य **सारस्वतं**
15　सरस्वतीसंबन्धि वेदव्रतम् आचीर्णं भवतीत्यर्थः ॥ ६ ॥

**अन्नं प्रजापतिमपृच्छत् । पृच्छामि त्वा [प्रजापते] इति वामेति वा ॥ ७ ॥**

18　**अन्न**मिति । पुरा कश्चित् पुराणः आद्यः ऋषिः वेदार्थज्ञः **अन्नं** विद्याया

---

5, 7. RMy. निवेद्य for निवेद्यं.

8. V. गुर्वीक्षितं for गुरुवीक्षितम्.

9. M. अधः शयितः, My. अथ शयितः, T. अहःशेषोयः शयितः for अहः शेषो ... *see* CN.

11. PBR. अहःशेषो° for शेषो°; PBR. °कर्म करोतीत्यथ for कर्मकरो भवतीत्यर्थः.

16. [प्रजापते] *see* CN.

उपभोगार्हं फलं धनार्जनविधिं च अनुसृत्य प्रजापतिमपृच्छत् । प्रश्नं कृतवान् । किं कृत्वा? हे प्रजापते इति आमन्त्र्य । अथवा हे वाम सर्वदैव श्रेष्ठ इति । त्वा इति त्वाम् । वेदाध्ययनलक्षणफलं धनार्जनविधिं च पृच्छामि । एतद्वाक्यं संकेतपदैः साकाङ्क्षं गूढार्थं च उत्तरवाक्यार्थेन विस्पष्टं द्योतते ॥ ७ ॥

तेन वेदार्थज्ञेन पृष्टः प्रजापतिरुत्तरमाह — 5

## सर्वत्र दानप्रतिग्रहः सोमयाज्यपीतो भवति ॥ ८ ॥

सर्वत्रेति । वेदविधिज्ञः ब्राह्मणः सर्वत्र सर्वावस्थायामपि अनिषिद्धदानप्रतिग्रहः सन् सोमयाजी भवति । य एवंविधः सोमयाजी धनवृद्धिकृषिगोरक्षणादिक्षत्रियवैश्यवृत्तिरहितः प्रशस्तदानप्रतिग्रहः सन् सोमयाजी भवति सः अपीतो भवति । जरामरणादिधर्मैरग्रस्तो भवतीत्यर्थः । अनेन वाक्येनेदमुक्तं भवति — सत्प्रति- 10 ग्रहोत्पादितेनैव धनेन सोमसंस्थैः ज्योतिष्टोमादिभिः यज्ञैः यष्टव्यमिति । अथवा अर्थान्तरम् । यः सर्वत्र दानप्रतिग्रहः कृष्णाजिनमेष्याद्यप्रशस्तसर्वदानप्रतिग्रहः सन् सोमयाजी भवति तेन धनेन पीतः सोमोऽप्यपीतो भवति इति प्रजापतिना पूर्ववाक्योत्तरं दत्तम् । अतः इदं ब्राह्मणमेव प्रजापतिगुणस्तवनमिषेण एतद्ग्रन्थाध्ययनज्ञानलक्षणं फलं प्रदर्शयति ॥ ८ ॥ 15

## स खलुन एतं प्रजापतिर्वा इदमेकम् ॥ ९ ॥

पूर्वं तावत् प्रजापतिमहिमा स्तूयते । खलुनः निश्चयात् एतत्सर्वम् इदं स एकम् एकः पूर्ववाक्याधिकृतः प्रजापतिरेव । तथा च श्रुत्यन्तरम् — प्रजापतिर्वा इदमेक आसीन्नाहरासीन्न रात्रिरासीद् (तां. ब्रा. १६. १.१) इति । तथा वेदलक्षणसर्ववाचोविवरणे अपरा श्रुतिश्च । तद्यथा — प्रजा- 20 पतिर्वा इदमेक आसीत् तस्य वागेव स्वमासीद् वाग् द्वितीया । स 21

1. R. om. फलं
2. BRR. om. एव.
3. BPR. om. त्वा इति.
7. R. adds अयमर्थः before वेद°.
11. R. ज्योतिष्टोमादिः सोमसंस्थायज्ञैः for सोम ... यज्ञैः.
14. V. पूर्व for पूर्व°.
18. V. पूर्व for पूर्व°.

**ऐक्षतेमामेव वाचं विसृजा** (तां. ब्रा. २०. १४. २) इति । अत्र **एतम् एकम्** इति च्छान्दसो लिङ्गव्यत्ययः ॥ ९ ॥

**अह्नः क्षितयः ॥ १० ॥**

**क्षितयः** पृथिव्यादिस्थितयः **अह्नः** प्रजापतेः अह्नो विभागः । तथा च
5 ब्राह्मणान्तरम् —

**सहस्रयुगपर्यन्तमहर्ब्राह्मं यदुच्यते ॥** (दे. अ. ब्रा. ३. २४)

इति ॥ १० ॥

एतैः स्तवनैः पूर्वं प्रजापतिमहिमानं प्रस्तुत्य उत्तरवाक्येन अस्य ग्रन्थस्य वेत्तारं प्रजापत्यादिपुरुषत्रयसमानं निरूपयति —

10 **पुरुषो वायमीश्वरोऽभिजायते ॥ ११ ॥**

अयमर्थः । अस्य ग्रन्थस्य वेत्ता स **पुरुषः सहस्रशीर्षाः सहस्राक्षः सहस्रपा**ल्लक्षणो नारायणात्मकः पुरुषः **अभिजायते** । **वा** अथवा । **अयम्** पूर्ववाक्याधिकृतः प्रजापतिर्जायते । अथवा । दशभुजः पञ्चवक्त्रः **ईश्वरः अभिजायते** इत्यर्थः ॥ ११ ॥

15 **अनाकाशीकरणं च ॥ १२ ॥**

अयमर्थः । यतः एतच्छास्त्रज्ञानात् ईश्वरलोकप्राप्तिलक्षणं फलमुक्तम् । अतः इदं ज्ञानम् **अनाकाशीकरणम्** अनधिकारिभ्यो न **प्रकाश्यमित्ययं** भावः ॥ १२ ॥

**चतुर्ऋचो भवति य एवं वेद य एवं वेद ॥ १३ ॥**

20 **यः** एतद्ग्रन्थोक्तं सर्वं **वेद** जानाति स **चतुर्ऋचो भवति**। अत्र ऋक्-शब्दः ऋगधिष्ठानभूतवेदचतुष्टयवाचकः । चतुर्वेदस्वरूपो भवतीत्यर्थः । अथवा
22 चतुर्ऋच इत्यत्र ऋक्शब्दः अभोज्यभोजनदुष्प्रतिग्रहलक्षणमहापातकप्रायश्चित्त-

---

2. R. om. लिङ्ग°.

16. R. ईश्वरत्व° for ईश्वरलोक°.

17. BP. प्रकाश्यति, R. प्रकाशनीयम् for प्रकाश्यम्.

भूतगौषूक्ताश्वसूक्तशुद्धाशुद्धीयद्वयसामचतुष्टयवाचकः । अस्मिन् पक्षे व्याख्यानम् — यः अस्य ग्रन्थस्य वेत्ता सः गौपूक्ताश्वसूक्तशुद्धाशुद्धीयद्वयलक्षितचतुःसामस्वरूपो भवति । एतावता किमुक्तं भवति? अस्य ग्रन्थस्य वेत्तुः अभोज्यभोजनदुष्प्रतिग्रहादिजातं महत् पापं विनश्यति । तद्यथा — शुद्धाशुद्धीये भवतः ॥ इन्द्रो यतीन्त्सालावृकेभ्यः प्रायच्छत् । तमश्लीला वागभ्यवदत् । सोऽशुद्धोऽमन्यत । स एते शुद्धाशुद्धीये अपश्यत् । ताभ्यामशुद्ध्यत् ॥ यदेव बहु प्रतिगृह्णाति । यद्गरं गिरति । यदनन्नमत्ति । यदशुद्धो मन्यते । तदेताभ्यां शुद्ध्यति ॥ गौषूक्तं चाश्वसूक्तं च भवतः ॥ गौषूक्तिश्चाश्वसूक्तिश्च । बहु प्रतिगृह्य गरगिरावमन्येताम् । तावेते सामनी अपश्येतां ताभ्यां गरं निरघ्नताम् ॥ यदेव बहु प्रतिगृह्णाति यद्गरं गिरति यदनन्नमत्ति तदेताभ्यां निर्हते ॥ (तां. ब्रा. १९. ४. ६-११) इति । अथवा चतुर्ऋच इति तरत्समन्दी (सा. १०५७—१०६०) इति । यः अयं प्रत्यक्षः प्रायश्चित्तस्वरूपः चतुर्ऋचः तदुक्तफलाधिकारी भवति । तत्फलमपि — ध्वस्रयोः पुरुषन्त्योः (सा. १०५९) इत्येतामृचमधिकृत्य ब्राह्मणेनोदाहृतम् । तद्यथा - ध्वस्रे वै पुरुषन्ती तरन्तपुरुमीढाभ्यां वै तदश्विभ्यां सहस्राण्यदित्सतां तावैक्षतां कथं नाविदमात्तमप्रतिगृहीतं स्यादिति । तौ प्रत्येताम् । ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे "तरत्समन्दी धावति" (सा. १०५७ – १०६०) इति । ततो वै तत्तयोरात्तमप्रतिगृहीतमभवत् ॥ आत्तमस्याप्रतिगृहीतं भवति य एवं वेद ॥ (तां. ब्रा. १३. ७. १२-३) इति । यास्केनापि व्याख्यातम् — तरति स पापं सर्वं मन्दी यस्तौति धावति । गच्छत्यूर्ध्वां गतिम् ॥ (नि. १३. १. ६) इति ॥ १३ ॥

---

2. BPR. °शुद्धीयोपलक्षित° for °शुद्धीयद्वयलक्षित°.

4. V. °भिजातं for °दिजातं.

13. R. प्रत्यहं, BP. प्रत्यहः for प्रत्यक्षः.

21. RP. add तरत् before मन्दी.

इदं प्रमाणमादृत्य पुराचार्यैर्विदां वरैः ।
सामसंबन्धिशास्त्राणि सुकृतान्यर्थविस्तरात् ॥

भगवन्नारदेनापि स्वरशास्त्रं सुविस्तरम् ।
लोमशप्रमुखैश्चापि नानाशिक्षाः प्रकल्पिताः ॥

5 ऋक्तन्त्रं सामतन्त्रं पुष्पं चापि सुविस्तरम् ।
साम्नां पुनस्तथा मात्रालक्षणं समुदीरितम् ॥

यथार्थं समवेतैश्च यज्ञविध्यर्थदीपकैः ।
एतद्बीजं समालोक्य सामभक्त्यादि कल्पितम् ॥

गुरुभक्तिप्रसङ्गेन शिष्यधर्मास्तथोदिताः ।
10 अन्यैर्मुनिवरैश्चापि ये केचित्समुदाहृताः ॥

शिष्यधर्मा दानधर्मा विद्यादानप्रशंसकाः ।
अन्येऽपि ये मुनिप्रोक्ता अस्मात्तेऽपि समुद्धृताः ॥

यथैकस्मात् प्रदीपात्तु दीपश्रेणिः प्रवर्तते ।
तथैतस्मात् प्रदीपाच्च ग्रन्थश्रेणिः सुविस्तृता ॥

15 इमं दीपं समालोक्य ब्रह्मयज्ञं समाचरेत् ।
त्रयीयज्ञं च यो विद्वान् तस्यैवेष्टं भवेत् खलु ॥

यथा प्रज्वालितो दीपो राजते सुगृहाङ्गणे ।
तथायं सामदीपस्तु भ्राजते सन्मखाङ्गणे ॥

3. 5 V सुविस्तृतम् for सुविस्तरम्.

10. BPR यैः कैश्चित् for ये केचित्.

11. V. प्रसङ्गकाः for प्रशंसकाः.

16. V. त्रयं for त्रयी°; BPR. तस्यैव सफलं for तस्यैवेष्टं-भवेत्.

शास्त्रमेतत्समालोक्य यो यज्ञान् विधिनाचरेत् ।
कदाचित्तस्य यज्ञेषु संरोधो नोपजायते ॥

सर्वान् कामानवाप्येह परं ब्रह्माधिगच्छति ।

इति सकलवेदार्थप्रकाशकस्वतःसिद्धचतुर्दशविद्याकुशल-
5 श्रीवंशभूषणद्विजराजभट्ट-श्रीविष्ण्वात्मजविरचितं
6 छान्दोग्यसंहितोपनिषद्भाष्यं समाप्तम् ॥

ॐ

---

1. BP. यज्ञेन विना, R. यज्ञे विधिना° for यज्ञान् विधिना°.

6. After समाप्तम् । B. adds श्रीपूर्णमङ्गलकामाक्षाम्बासमेत अगस्ते-श्वरार्पणमस्तु । पूर्वपुस्तकमतिसंदिग्धमनुमानेन लिखितम् । अपराधः क्षम्यताम् ॥

॥ श्री ॥ श्री ॥
श्री अश्वत्थनारायणः प्रसन्नोऽस्तु ॥
शुभं भूयात् ॥

संहितोपनिषद्भाष्यं शुभकृत्कुम्भमासके ।
लिखितं शोधितं सर्वं शिवपादे समर्पितम् ॥

V. after समाप्तम् ॥ adds :—संवत् १६४५ वर्षे ज्येष्ठवदि ३ बुधे त्रिपाठिनानाभाई अवलोकनार्थं लिखितम् ॥

## CRITICAL NOTES.

P. 7. L. 12.

BP. कल्पादयोऽपि and V कल्पादयेऽपि. It is clear that the reading in all the three above is corrupt. We have, therefore, corrected it as कल्पाद्येऽपि.

P. 9. L. 16.

निर्मंथ्यग्नावजायमाने. In BVP it is only निर्मंथ्यग्न्यजायमाने. It appears to be a scribal mistake perpetuated in all the three mss. which we have corrected.

P. 9. L. 17. अजाकर्णं ...

ब्राह्मणहस्ताजाकर्णकुशस्तम्बेषु. All the manuscripts we consulted for this edition read only अजाकर्णं except V, which makes it अजातकर्णं. The commentator, who lists the contents of Ṣaḍviṁśabrāhmaṇa here, actually refers to the contents of the *sūtra* V.1.2 which says that when a sacrificer fails to kindle the sacrificial fire he should try to bring the ordinary fire and make oblation therein. But, when even the ordinary fire cannot be brought, one is free to make the oblation "successively either into the hand of a Brahman or into the ear of a he-goat or into a bundle of *kuśa* grass or into waters." In the Ṣaḍviṁśabrāhmaṇa the word used is अजस्य कर्णे meaning "into the ear of a he-goat." But Dvijarājabhaṭṭa prefers here अजाकर्णं, the ear of a she-goat. It may be noted that the T. B. 3.7.3.1 mentions a she-goat only in this connection. Oldenberg believes that the word *aja* (he-goat) in this context should be taken as indifferent to gender (Religion des Veda p. 78 note 3). Therefore, it may be presumed that the Ṣaḍviṁśabrāhmaṇa V.1.12 may have had अजा - (or अजायाः) कर्णे as a variant reading in place of अजस्य कर्णे.

P. 13. L. 12.

T. यथा मन्द्रषट्ताराणि. M and R have lost the introductory part of the commentary and do not have this passage. The commentator here refers to three *sthānas* of वाक् or voice, which, according

to the Prātiśākhya, are मन्द्र, मध्यम and उत्तम (vide ऋक्प्रातिशाख्य 13.42). The same three *sthānas* are also called मन्द्र, मध्यम and तार in the śikṣās. Therefore, the passage should read either मन्द्रमध्यमोत्तमानि or मन्द्रमध्यमताराणि. We have selected the latter reading for reason that तार and मन्द्र are found in the manuscripts.

P. 19. L. 8.

Three kinds of saṁhitās are cited, in the sūtra: अथैतास्तिस्रः संहिता .... the last of which is termed as अमित्रहू. Sāyaṇa, however, names the third saṁhitā as मित्रहू by oversight, without taking notice of the *sandhi* in the passage and also gives wrong explanation of the term. Among the three saṁhitās *viz.*, देवहू, वाक्शबहू and अमित्रहू, the last two are the names of the saṁhitās which are sung or recited in wrong tone and defective manner. The saṁhitā, which is recited in right tone (*i.e.*, in मन्द्रस्वर) will invoke gods and it is, therefore, called देवहू. If a saṁhitā is recited or sung in the manner as if one weeps it will only bring calamities including death to the reciter and if it is recited in the manner as if one loudly cries, it will invite robbers and thieves to the house of the reciter. These two saṁhitās are called वाक्शबहू and अमित्रहू respectively. Sāyaṇa, however, wrongly separates the last word from sandhi dropping initial अ and explains it: सर्वानामाह्वानशीला. He explains the term again later in another place as: मित्राणामाह्वानशीला। तेषु च गृहमागतेषु तत्रत्य धनमुपभोगेन क्षीयते। अतो यद्यप्येषा मित्रहूरिति नाम्ना श्रेयसी तथापि फलतो दुष्टेति तात्पर्यम् (p. 22. l. 4-6). This is how Sāyaṇa twists the word, once wrongly separated, and forces a meaning, on the word that is not warranted in the context. He takes *mitrāṇi*, friends, for parasites! All this explanation is indeed un-natural and unwarranted.

P. 20. L. 14.

The readings in BV are wrong. The meaning of either ud + √ṛc of B, or ud + √añc of V, does not fit in the context. उद्वृत्त्यते of P and उद्विज्यते of R seem to have been the altered readings. The brāhmaṇa here is explaining the three kinds of saṁhitās, one by one, stating the resultant rewards or punishments to the reciters thereof. Explaining what is वाक्शबहूः the

sūtra: अथ यत् क्लबितमिव...says that one who recites the Veda indistinctly as also in a manner as if one wails would meet with premature death.

तस्याः संहितायाः फलम्... is the introductory sentence in the commentary preceding the text क्षिप्रं मरिष्यति. Therefore, the reading should be either... फलमुच्यते or ... फलमिदमुच्यते preferably the latter, for reason that in his commentary on the next sūtra *viz.*, अथ यदाक्रन्दितमिव..., the commentator introduces the punishment meted out to one who recites the saṁhitā in the manner called अमित्रहू, with this sentence: यस्तथा...अधीते तस्यायं दोषः. It may be seen that the commentator uses the pronoun अयं here in relation to दोषः. Likewise the phrase above should be इदं फलम्

—L, 17.

VB. संहितास्वरूप (°सरूप° P) देवता इति विद्यात् । किम् । This sentence is corrupt and conveys no meaning. इति of the next sentence has been transferred before विद्यात् here and °रूपादेव was wrongly copied as °रूपदेव which was later altered as °रूपदेवता by some in his attempt to render the sentence sensible or understandable. The sentence, as it is, does not fit in the context and clearly betrays the efforts of copyist who, in his attempt to correct the mistakes of his predecessors, changed the whole sentence beyond recognition.

P. 21. L. 3.

क्लबितमिव ग्लानाक्षरा क्षीणस्वरेण.... R reads this as अत्यब्धिमिव गाहमाना while M as °त्यबितमिव गानाकारा. It may be seen that the reading in R is meaningless as in M it is corrupt. The explanation given here is obviously of क्लबितमिव which cannot mean अत्यब्धिमिव गाहमाना, and °त्यबितमिव of M is evidently a scribal error for क्लबितमिव. Again गानाकारा is a scribal mistake for ग्लानाकारा or most probably for ग्लानाक्षरा. We have, therefore, corrected the readings accordingly.

P. 23. L. 13.

In MR the reading found is संपूर्णमेव which does not seem to be correct, for the word in the text is संपूर्णा and not संपूर्णम्. The

commentator here explains the words from the text one by one and संपूर्णा is one of the adjectives qualifying वाक्. Therefore, it cannot be संपूर्णम्.

P. 24. L. 12.

MR. मार्गे कर्णस्थाने यन्ति गच्छन्ति. The commentator here explains the compound मध्यायिनी of which the first member is मध्य- and not मार्ग-. Again the verbs यन्ति गच्छन्ति which explain the second part of the compound are in plural, and the plural is not warranted in the present context. Therefore, either it should be एति गच्छति or यन्ती गच्छन्ती. The whole sentence appears to have been meddled with by scribes. We have, therefore, corrected the sentence as मध्यायिनी मध्ये कर्णस्थाने यन्ती गच्छन्ती, मध्ये वर्तमाना मध्यस्वरेणोच्चार्यमाणा चेत्यर्थः ।

— L. 14.

In MR शनैः is repeated twice and explained as मन्दम्. From this it appears that the text which Sāyaṇa commented on read: शनैः शनैः वान् सुखी.... M and R have omitted वान् from the commentary. We have, however, added the word in square brackets.

P. 25. L. 9.

**प्रतिषेधात्माकारः**... In BVP it is प्रतिषेधात्स्वकारः which is corrupt. In many places the mistakes and errors are common in BV which P, without any thought, simply perpetuates. The phrase प्रतिषेधात्माकारः here refers to the negative particle अ- in अपुत्र्यपशव्या which, the commentator says, is applicable to both पुत्र्य- and पशव्य-. Hence the reading found in BPV has no meaning.

P. 25. L. 15.

In MR उत्सृष्टा is explained as उन्मिता which is not correct. Dvijarājabhaṭṭa interprets it as अतीवोच्चस्वरेण वर्तमाना. The correct reading might be उन्नीता which appropriately answers this explanation. Therefore, उन्मिता appears to be a scribal error for उन्नीता.

P. 26. L. 12.

In MR वाता, the instrumental singular, has been wrongly changed to वाताः and interpreted as चलिताः महीरुहाः. Again बहुविभग्नं,

which is an adverb, is explained as बह्ववयवजाता विभग्नाः विशेषेण भग्नाः and शेते, the verb, is converted into plural in the commentary to conform to the syntactical order and position of the subject महीरुहाः. In this way the commentary has been tampered with and the text has been misinterpreted. All these unauthorised changes and deviated interpretations lead one strongly to infer that the commentary on the minor Brāhmaṇas was not actually written by the commentator of the Samhitās.

P. 27. L. 8.

After the verse कुतीर्थाद् ... ... किल्बिषम् ।। (पा. शि. 50) all the manuscripts read इति अस्थानोच्चरितस्य फलवचनम्. The commentator quotes here verses from Pāṇini-śikṣā describing the good and bad rewards one earns as a consequence of correct or faulty articulation of sounds. While the verse कुतीर्थात्...(पा. शि. 50) refers to the bad consequences of incorrect articulation, सुतीर्थात् (पा. शि. 51) refers to the good rewards for correct articulation. Therefore, the introductory sentence referring to the second verse should be स्थानोच्चरितस्य and not अस्थानोच्चरितस्य. We have, therefore, carried out the necessary correction.

P. 37. L. 1.

BPR. सखायस्त्वा° (ग्राम. 2. 62. 1). The examples given here are for the सर्वपदस्तोभ. But सखायस्त्वा (ग्राम. 2.6.62.1) quoted by BPR has no स्तोभ but in the first पाद (सखायस्त्वा औहोह्होहाइ). Therefore, this cannot be cited as an example here. Whereas स घा यस्ते (ग्राम. 9.2.365.) has *stobha* in all pādas of its first sāmā-gāna. (vide सघायस्ताइ । ए । दिवोनरा ३ ।।ए।।). Similarly अक्रान्त्समुद्रः (ग्राम. 15.6.529) has *stobha* हो । हाइ । repeated in all the pādas. Therefore सखायस्त्वा has been wrongly written in BPR in place of सघायस्ते.

P. 37. L. 3.

The commentator gives examples for four different *sāma-gānas*, basing on the nature and place of स्तोभ in the *sāma-gānas*. The first example was for सर्वपाद, the second for अभ्यस्त, the third for सर्वावयवनिवृत्त (*i.e.*, a gāna in which no *stobha* is inserted in any of the *pādas*. This may be termed as *Zero-stobha*) and the

fourth for सर्वत्रप्रवृत्त *i.e.*, unlike the above three which are entirely elaborated on the *yonimantras*, the fourth ones are simply based on *stobha* alone.

Now after illustrating the first gāna, the commentator gives example for the second *i.e.*, अभ्यस्त. But before giving illustrations there must have been an introductory sentence as seen earlier before every other illustration. The ms. V has omitted the sentences from तथा केषुचित् onward upto इत्यादि. This must have been due to the visual error of the scribe who after writing तथा केषुचित् सामसु was unconsciously led to सर्वावयवनिवृत्ताः. This resulted in the omission of the intervening sentences. BR and P have given illustration for अभ्यस्त but have omitted the introductory sentence. We have, therefore, added this sentence in square brackets.

P. 37. L. 13:

The gāna सोमामो3मा । त्रिः (आ. गा. 4.1.174.3 स्तोभगान) is known not as सोमव्रत but as परमेष्ठिनः प्राजापत्यस्य व्रतम्. The सोमव्रत^s are the आरण्यकगान^s, 4.1.97.1 & 98.1, based on two different *yonimantras*, *viz.*, सं ते पयांसि (सा. 603) and त्वमिमा ओषधीः (सा. 604) respectively. Since examples cited here are for the सर्वत्रस्तोभ or the *gānas* based on स्तोभ alone and not on *yonimantra*, सोमव्रत cannot be quoted as an example in this context. And सोमासो3मा, the *gāna*, cited as example, is *not* सोमव्रत but प्राजापत्यव्रत. Therefore, the reading could be only प्राजापत्यव्रत —.

P. 39. L. 1.

The commentator explains सौष्टव्यम् as शोभनप्रकारेण स्तुतं तस्य भावः which is not philologically correct, for, सुष्टुतस्य भावः could be only सौष्टुत्यम् and not सौष्टव्यम्. The word सौष्टव्यम् was derived from सुस्तव (सु+स्तु+अ) with the suffix ष्यञ् as per गुणवचनब्राह्मणादिभ्यः कर्मणि च (पा. सू. 5.1.124) and चतुर्वर्णादीनां स्वार्थे उपसंख्यानम् (वार्तिकम्). Accordingly the philological explanation of सौष्टव्यम् could be only शोभनः स्तवः सुस्त(ष्ट)वः, तस्य भावः. But from his explanation in the commentary, Dvijarājabhaṭṭa seems to have been having before him the text not as सौष्टव्यम् but as सौष्टुत्यम्, a reading, which is not found in any manuscript. It may, however, be noted here that except V all manuscripts have lost the commentary on सर्वत्र सौष्टव्यम्. R combines this *sūtra* with the following but with

no commentary. Therefore, in this place we have to depend entirely on one manuscript alone for the readings. It becomes, however, clear that the scribes have meddled with the sentences here as is evident from ... °विशिष्टेषु प्रयुक्तं (?) ... गेयम्.

P. 41. L. 15.

BV and P read अत्र अविसृष्टेष्विति विशेषोपादानत्वात्. Referring to the *sūtra* सर्वत्र विसर्गोपग्रहेषु अविसृष्टानि.... the commentator explains that among the syllables ending in विसर्ग those which are अविसृष्ट *i.e.*, bereft of ह्रस्वदीर्घ would be अनुपगृहीत *i.e.*, they will have no विकार or undergo no alterations while being sung in the *sāma-gāna*. Since अविसृष्ट expressly excludes the विसृष्टs from the purview of this rule, the syllables ending in विसर्ग, the विसृष्टs, as they are termed here, can obviously undergo manifold alterations and changes according to the prevailing rules of the *sāma-gāna*. The commentator explains this point with illustrations from the Sāma-Veda.

Now the passage, as is found in BVP, is corrupt and un-intelligible. अविसृष्टानि here is wrongly written as अविसृष्टेषु and विशेषोपादानात् as विशेषोपादानत्वात्.

P. 42. L. 22.

BVP अत्र उभय्यपि (उभये अपि R) संहिते सर्वकामार्थे उक्ते. The word उभयी in this sentence qualifies the substantive संहिता which is used here in the dual. उभय, according to the grammar, has only the singular and plural numbers and the noun which it qualifies can only be in either of these two numbers as warranted. Therefore, the sentence should be either उभय्यपि संहिता सर्वकामार्था or उभे अपि संहिते...उक्ते. Since the other two adjectives in this sentence and the reference in the following are in the dual we have adopted the second alternative. (According to Haradatta, the grammarian, of course, उभय can have the dual too. But even in that case उभयी (f) will have to be adapted as उभय्यौ which, while may be correct, looks rather cumbersome.)

P. 43. L. 9.

All the manuscripts and the two printed editions, P and R, read चतुर्थमन्द्रानिस्वार्या स्वराश्च भवन्ति. Here the *sūtras* 15, 16 and 17

explain various types of *prastāvas* qualified by different *svaras*. The words चतुर्थस्वराः and मन्द्रस्वराः of the preceding *sūtra* and प्रथमस्वराः etc., of the following *sūtra* are all the adjectives of प्रस्तावाः. Therefore, चतुर्थमन्द्रातिस्वार्या स्वराश्च of the intervening *sūtra* too, in this context, should, as a matter of fact, qualify प्रस्तावाः which the *sūtra* explains. But from the commentator's introductory note: प्रस्तावा इति वाक्यशेषः and his further explanation: स एवोक्तप्रस्तावः त्रिभिः स्वरैरपि भवति । चतुर्थमन्द्रातिस्वारलक्षणैरपि भवति, we may presume that the wordings in the *sūtra* as commented on by Dvijarāja-bhaṭṭa, were चतुर्थमन्द्रातिस्वार्यैः स्वरैश्च भवन्ति. We cannot, however, accept these readings for two reasons:- firstly the *sūtras* 15 and 17 describe प्रस्तावाः with the qualifying adjectives and therefore the intervening *sūtra* which also describes the same प्रस्तावाः cannot change the style abruptly. Secondly no manuscript supports these changed readings. Therefore, we have corrected the reading as चतुर्थमन्द्रातिस्वार्यस्वराः.

P. 47. L. 1.

BVPR reads प्रयुज्येरन् which is wrong in view of the syntactical change made by the commentator from passive to active voice. The scribe simply copies the verb from the text which is in passive voice, unmindful of the changes made by the commentator. He has neither noticed the कर्तृ (उद्गातारः) which is in nominative plural nor the कर्मन् (व्यञ्जनवतः) which the commentator has changed from the nominative to the accusative to suit the change of voice from passive into active. We have, therefore, corrected the verb as प्रयुञ्जेरन्

P. 52. L. 9-10.

B. यज्ञेष्ट(!) क योगः योगमार्गः श्रि (!) श्रेयसः; V. यज्ञेष्वेगयोगः योगमार्गः निःश्रेयसः P...यज्ञेषु कः योगः योगमार्गः शिश्राय स पदार्थः. The passage is corrupt in both the mss, which, Burnell appears to have attempted to correct. But even the corrected sentence of Burnell hardly makes any sense. The phrase **यज्ञेयुक्ताः**, which the commentator takes for बहुव्रीहि compound, is being explained here. This explanation becomes possible only if the word युक्त, which is the second member of the compound, is formed with the abstract primary

suffix -त (भावे क्तः) meaning योग. We have, therefore, corrected the sentence accordingly.

P. 52. L. 14.

BVP. प्रमाणवत् which is wrong. R omits this word altogether. We have, however, corrected the reading as प्रमाणम्

P. 53 LL. 19–21 & P. 54. L. 1.

The sentences in BPVR ... इति स्तोत्रीयः पठितः and इत्येतत्प्रभृतयश्चत्वारः षड्चः (°चाः V.) पठिताः- are not correct. The commentator tells us here, that on the ninth day of the sacrifice द्वादशाह the verse अक्रान् and the three hymns, each beginning with एष देवः, एष धिया and एष उ स्य respectively are to be sung. He actually tells us in one sentence as to what verses and hymns are to be recited or sung on that particular day - तत्र नवमेऽह्नि ... इति एते चत्वारः पठिताः. He qualifies the verse अक्रान् with स्तोत्रीयः and the other three hymns with दशर्चः, अष्टर्चः and षड्चः respectively according to the number of verses each of the hymns contains. The last hymn consists of only six verses and hence the sentence after the verse (*i.e.*, एष उ स्य) should be इति षड्चः and not इत्येतत्प्रभृतयश्चत्वारः ... which is grammatically wrong. The sentence (इत्येतत्प्रभृतयः...) may mean that the four hymns such as cited above consisting of a set of six verses each, are recited. This is not the correct statement for the first two sets contain ten and eight verses respectively. We have, therefore, set the sentences right.

P. 55. LL. 5 & 14.

श्रेयसी तेऽहम्. This is the reading found in all mss. But P & R have it as श्रेयसे... The commentary, however, clearly explains श्रेयसी as श्रेयः पदार्थं दायिनी taking the word as an adjective of विद्या. This leaves no doubt as to the reading which Dvijarājabhaṭṭa commented on. We have, therefore, accepted श्रेयसी in the text as well.

P. 64. L. 1.

BPR प्रायः विद्यायाः...; V. अप्राप्तायाः विद्यायाः... The brāhmaṇa has already in unambiguous terms expressed that under no circumstances the sacred knowledge should be imparted to an

undeserving disciple. The disastrous consequences one will have to encounter if one disobeyed this injunction, are also given in the brāhmaṇa.

Now the sentence, as it is in BPR, would only mean that the knowledge normally, or as a general rule, should not be revealed to an undeserving disciple, while the one in V would mean that the knowledge, yet to be acquired, should not be revealed to an undeserving disciple! Both these expressions go against the very spirit of the express injunction of the brāhmaṇa, which says that it is always better to pass away without the knowledge being imparted to any, rather than hand it over to an unbecoming disciple– विद्यया सार्धं म्रियेत । न विद्यामूषरे वपेत् (सं. उ. ब्रा. 3. 10). In view of this background it is clear that the reading in BPR as well as in V is not correct. While in V the scribe by oversight has added the negative particle अ- to प्राप्तायाः, in BPR he has reduced the word प्राप्तायाः to प्रायः ( <प्रायाः <प्राप्तायाः ). We have, therefore, adopted the reading correctly as प्राप्तायाः.

P. 68. L. 12.

In V the words and phrases in the sentence are mixed up while BPR leaves out the greater part of the sentence. We have accepted the readings of V but rearranged the words and phrases in proper order. In V the sentence runs: समावर्तस्तपना(!) दूर्ध्वं गृहाश्रमे प्रवर्तमानोऽपि ब्रह्मचारी स्वदारनिरतो भवति । ऋतावेव जायोपेयी ।

P. 70. L. 2.

B & P read इन्द्रादयः ये लोकाः अयं while V ये इमे भूरादयो लोकाः अयं. The commentary here explains the words एषः and लोकाः from the text. It is clear that the words are wrongly mixed up here and the sentence is thus rendered unintelligible. अयम् is obviously the meaning of एषः and भूरादयः ये is the explanation of इमे. Therefore the order of words in the sentence should be **एषः** अयम् **इमे** भूरादयः ये **लोकाः** तत्समानो भवति ।

P. 73. L. 15.

The *sūtra* 5.3 implies that one who knows the Sāma-Veda can attain those rewards which are normally derived by performing

the costly sacrifices such as दर्शपूर्णमास &c. The performance of a sacrifice starts with kindling of the sacrificial fire and during this, various Vedic mantras are employed and the prescribed sāmans are sung. The performance of a sacrifice is costly and the procedure is elaborate and complicated. But without all this, by mere recitation of the prescribed sāmans according to the formula described in the brāhmaṇas, one can command the presence of the *shrauta-Agni*, though not physically, and obtain the rewards sanctioned by the scriptures. In support of this the brāhmaṇa quotes authority from the Sāma-vidhāna-brāhmaṇa, which primarily deals with the subject at length.

Now in all the manuscripts and printed editions the *sūtra* is found as अथैषाग्नि(श्री T.) रुपसमाहितो भवति। But it would be more appropriate in the context if the reading was अग्निरपि instead of अग्निरुप°. It may be seen that in the previous *sūtra* sāmans are referred to be sung on the day when a sacrifice is being performed, and a sacrifice cannot be performed without fire being kindled. But in this *sūtra*, it is said that one could achieve the result by mere सामवेदजप,— without sacrificial fire being kindled. Therefore, the sentence must be ... दर्शपूर्णमासयज्ञैर्विनापि. But all the manuscripts and the two printed editions have only ... यज्ञैरपि which is not correct. We have, therefore, inserted विना° after यज्ञैर् in square brackets.

P. 74. L. 9.

M. अध: शेष: My अथ शयित: for अह: शेष:; T after अह: शेष: adds य: (ऽध: ?) शयित:. It would be more appropriate if the *sūtra*, in the context is read: तिष्ठत्यह: शेषोऽध: शयितो भवति ॥ The duties of a student (ब्रह्मचारिन्) are enumerated in this and the previous *sūtras* briefly in a nutshell.

In Grantha script ध, य and थ resemble each other very closely. Therefore य: of T and थ of My may have been wrongly written for ध: by the scribes. But the *sūtra* according to the commentary was only तिष्ठत्यह: शेषो भवति. Dvijarājabhaṭṭa, the commentator, explains शेष: as संध्यावन्दनहोमाभिवादनादिशेषकर्मकर:, a far-fetched explanation, which rather appears to have been

imposed on the word. A student, according to धर्मशास्त्र is prohibited to sleep on a cot; he should always lie and rest on the floor (स्थण्डिलशायिन्) alone. Therefore अधः शयितो भवति fits well in the context. A brahmacārin stands by his preceptor during the day while at night he sleeps on the floor by his preceptor. We have, therefore, inserted अधः शयितः in square brackets in the text which might have been dropped by the copyists by mistake or by oversight. The *sūtra* thus will have three sentences viz., तिष्ठत्यहः, शेषः (भवति) and अधः शयितो भवति.

P. 74. L. 16.

All the manuscripts including BV and the printed editions read only पृच्छामि त्वामिति वामि (°मे° R) ति वा except that M omits वामिति. The sentence is incomplete; the reading is corrupt and further वामिति वा here appears cumbersome and a meaningless appendage. But when we read the commentary we are able to pick up the words lost in course of transcription by the scribes and thus reconstruct the sentence. The first इति in this *sūtra* actually forms the remnant of this lost phrase. The *sūtra* is explained in the commentary in this way: प्रजापतिमपृच्छत् । प्रश्नं कृतवान् । किं कृत्वा? हे 'प्रजापते इति' आमन्त्र्य । अथवा हे 'वाम' सर्वदैव श्रेष्ठ 'इति' । 'त्वा' इति त्वाम्... The words प्रजापते and वाम commented on here are not found as part of the text in any available manuscript. Further in place of त्वा we have only त्वाम्. But when we insert प्रजापते in its proper place and sequence, and also correct वामिति as वामेति with the change of त्वाम् into त्वा the text at once becomes correct and intelligible as the commentary thereon becomes quite clear and relevant. We have, therefore, in the light of these evidences, set the text correctly as **त्वा [प्रजापते] इति वामेति वा ॥**.

## APPENDIX A.

The *sāmāns* quoted by *pratīka* or by the technical name of the *sāma-gānas* either in the text or commentary are listed below in alphabetical order. In case of *pratīkas*, the technical names of the respective *gānas* and in case of technical names the respective verses are also given against each.

I

| *Verse.* | *Reference.* | *Technical name.* | *Page.* |
|---|---|---|---|
| अक्रान् | (सा. ५२९) | सम्पा वैयश्वम् | ५३ |
| अग्न आ याहि वीतये | (ग्राम. १.१.१.१) | पर्कः | ३३,३४,४० |
| अग्निंवः । ओहाइ | ( „ १.३.२१.३) | ऐडं सैन्धुक्षितम् | ४१ |
| अग्निं वो वृधान्ताम् | ( „ १.३.२१.१) | सैन्धुक्षितम् | ४१ |
| अग्निं दूताम् | ( „ १.१.३.१) | बृहद्भारद्वाजम् | ४३ |
| अग्ने त्वं नः | ( „ १२.११.४४८.२ & ४) | अत्यर्द्दौ | ३५ |
| अदुग्धा इव | ( „ ६.१.२३३.१) | भारद्वाजस्यार्कः | ४६ |
| अधिपा । ताइ (स्तोभगानम्) | (आ. गा. ५.५.२१२-२१३) | देवव्रते | ३७ |
| अया रुचा | (ग्राम. १२.१२.४६३.१-३) | विषमानि | ३५ |
| अश्वन्नत्वावाजिनम्मा । जया२३०ता: | ( „ १५.६.५२३.३) | जानस्याभीवर्त्तः | ३९ |
| आयाहीवीइतोयाइ । तोयाइ | ( „ १.१.१.१) | पर्कः | ३४ |
| उत्सा २ हो १ इ | ( „ १४.५.५११.७) | उद्वत्प्राजापत्यम् | ४१ |
| उदु त्यं जातवेदसम् | ( „ १.३.३१.१) | सौर्यम् | ३३ |
| उन्नयामि । होइ । (स्तोभगानम्) | (आ. गा. ६.३.२९०) | आदित्यस्योन्नया-दित्यात्मा | ३७ |
| उप त्वा जुह्वो मम | (सा. १५४२) | | ५३ |
| ऋतस्य पथ्या ३ | („ १५८७) | | ५३ |
| एष उ स्य | („ १२७४) | | ५३ |
| एष देवः | („ १२५६) | | ५३ |
| एष ... | („ १२६६) | | ५३ |

| *Verse.* | *Reference.* | *Technical name.* | *Page.* |
|---|---|---|---|
| ए २ (पञ्चकृत्वः) योवा | (आ. गा. ४. ४. ११८. १) | प्रजापतेश्चतुस्त्रिंशत् संमितम् | ३७ |
| ओम्नाइ | (ग्राम. १. १. १. १) | पर्कः | ३३,४०,४३ |
| ओहाइ। यदिन्द्रना। हुषीषू ३ वा | (ग्राम. ७. ३. २६२. १) | श्रौष्टीगवम् | ४३ |
| औहोइत्वामिद्धिहवामहाए | (आ. गा. १. २. १४. २) | भरद्वाजस्य बृहत्साम | ५० |
| क ३ स्य वृषभो युवा | (ग्राम. ४. ३. १४२. १-३) | भारद्वाजानि आर्षभाणि | ५३ |
| तमिन्द्रं जोहवीमि | (ग्राम. १२. १२. ४६०. १) | अक्षय्यम् | ३५ |
| तिस्रोवाचा: | (ग्राम. १२. १. ४७१. १-६) | वैष्टम्भपाष्ठौहानि | ४२ |
| तुवा ३४ औहोवा । त्वांकाष्ठा औहोवा। सू २ आर्वा २३४१ ताः | (आ. गा. १. २. १४. १) | भरद्वाजस्य बृहत्साम | ३९-४० |
| त्वे अपश्चानश्श्नथिष्टना | (ग्राम. १६. ८. ५४५. ६) | आन्धीगवम् | ४९ |
| त्वश्सुतोमदाहाउन्तमा: | (सा. १३२४) | | ३६ |
| त्वामग्ने पूष्करादधि | (ग्राम. १. १. ९. १) | अग्नेरार्षेयम् | ४१ |
| दूताश्वो विश्ववेदसाम् | (ग्राम. १. २. १२. १) | वैश्वमनसम् | ३८ |
| प्रपा वयममृतम् | (ग्राम. १: ४. ३५. ४) | यज्ञायज्ञीयम् | ४२ |
| पर्प्रीं वयममृतम् | (ऊ. गा. १. १४ ? ) | ? | ४२ |
| परीतो षिञ्चता सुतम् | (ग्राम. १४. ५. ५१२. १-१५) | अच्छिद्रादीनि | ३४ |
| पवमानस्य ते कवे | (सा. ८५७) | | ५७ |
| पाह्यू ३ त | (सा ३६) | | ५३ |
| पिन्वो अर्कैः | ( ? ) | ? | ४० |
| पुनानः सोम धारय | (ग्राम. १४. ५. ५११. १-१६) | आयास्यादीनि | ३४ |
| प्रातरग्निः | (ग्राम. २. ९. ८५. १) | बृहतश्च कौमुदस्य साम | ४२ |
| बृहद्वयो हि | (ग्राम. २. ९. ८८. १-२) | आत्रेये | ४२ |
| भद्रा वस्त्रा समन्या ३ | (सा. १४००) | | ५३ |
| मा न इन्द्राभ्या ३ दिशः | (सा. १२८) | | ५३ |
| मानो हृणीथा: | (ग्राम. ३. १२. ११०. १-२) | पक्थस्य सौभरस्य सामनी | ३५ |
| यंयं य २० याम् | (ग्राम. ९. ११. ३३७. २) | गृत्समदस्य मदः | ४१ |

| Verse. | Reference. | Technical name. | Page. |
|---|---|---|---|
| यज्ञायज्ञा | (आ. गा. ३. ७. ९१. ४) | चतुर्थं स्वरसाम | ५० |
| यद्यवाई | (आ. गा. १. १. १. १) | अष्टौ वैरूपाणि | ५० |
| योनीः । तआइ | (ग्राम. ८. ९. ३१४. १) | योनि (गृहत्समद-) | ३७ |
| रक्षोहाविश्वचाहाउर्षणाइः | (सा. ६९०) | | ३६ |
| रम्मन्ये ३ दास्वन्तम् | (ग्राम. ११.१२.४६५.१) | भारद्वाजम् | ४१ |
| वयाहोवा२ंसिनप्त्योर्हितः | (ग्राम. १३. १. ४७६. २) | और्णायवम् | ३६ |
| षताश्रू २३४५ ता ६५६ इ | (ग्राम. ७. ४. २७२. ३) | ऐन्द्रं वासिष्ठम् | ३८ |
| संवेशनस्तन्वे ३ | (सा. ६५) | यामं कौत्सम् | ५३ |
| सद्यायस्ताइ । ए । | (ग्राम. ९. २. ३६५. १) | शाकपूतम् | २७ |
| सोमासोमा । (त्रिः) यत्र चक्षुः (स्तोभगानम्) | (आ. गा. ४. १. १७४) | परमेष्ठिनः प्राजापत्यस्य व्रतम् | ३७ |
| स्तोम२ंरुद्रा | (ग्राम. १. २. १५. २) | जराबोधीयम् | ४० |
| स्यपामोषधीनाम् | (आ.गा. ६.१.१५८-१५९.१) | आदित्यव्रतम् | ४१ |
| स्व ३ र्नो २ंशुः | (सा. ?) | | ५३ |
| हाउहाउ । हुप् । प्रकावियाम् | (ग्राम. १५. ६. ५२४. ४) | वाराहम् | ४७ |
| हाउहोहाइ । अन्तरिक्ष२ंसुवर्दिवं जगन्मा | (आ. गा. १५६-१५८) | विष्णोः स्वरीयांसि | ५१ |
| हुवौहो १ इ । यज्ञायथाः | (आ. गा. ३. ७. ९१. ५) | पञ्चमं स्वरसाम | ५१ |
| हो हाइ । अक्रन्त्समुद्रः प्रथमे विध । मान् | (ग्राम. १५. ६. ५२९. १) | सम्पा वैयश्वम् | ४३ |

II

| Technical name. | Reference. | Verse. | Page. |
|---|---|---|---|
| अर्कपुष्पम् | (ग्राम. १६. ९. ५६५. १-२) | पवित्रन्तेविततं | ४३ |
| आदित्यव्रतम् | (आ.गा. ६.१.१५७-१५९.१) | उवी २ उवी | ४१ |
| आन्धीगवम् | (ग्राम. १६. ८. ५४५. ६) | पुरोजितीवो ४० धासाः | ४९ |
| उद्वत्प्राजापत्यम् | ( ,, १४. ५. ५११. ७) | पुनानः सोमधा । | ४१ |
| ऋषभः | ( ,, १२. १. ४६७. ३) | हाहाउच्चातेजा | ३८ |
| और्णायवोत्तरम् | ( ,, १३. १. ४७६. २) | परिप्रिया ५ दिवः कवाइः | ३६ |

| *Technical name.* | *Reference.* | *Verse.* | *Page.* |
|---|---|---|---|
| गृत्समदः | (ग्राम. ८. ९. ३१४. १) | योनीः । तआइ । | ३७ |
| **तिधेनावा** | ( ,, १२. १. ४७१. ४) | तिस्रोवाचउदीरतो | ४२, ४३ |
| त्रैष्टुभम् औशनम् | ( ,, १५. ६. ५२३. ५) | अश्वन्नत्वावाजिनम्मा | ३९ |
| देवव्रतानि | (आ. गा. ५. ५. २१२-२१४) | अधिप । ताइ | ३९ |
| धर्म | (ग्राम. ११. ९. ४२९. १) | पवस्वसोमा । | ४९ |
| प्राजापत्यव्रतम् | (आ. गा. ४. १. १७४) | सोमासो३मा (स्तोभगानम्) | ३७ |
| बृहत्कौमुदम् | (ग्राम. २. ९. ८५. १) | प्रातरग्निः | ४२ |
| बृहत्साम | (आ. गा. १. २. १४. १) | औहोइत्वामिद्धि | ३९ |
| **मर्ता** | (ग्राम. २. ९. ८५. १) | प्रातरग्निः | ४२, ४३ |
| यज्ञायज्ञीयम् | (ग्राम. १. ४. ३५. ४) | यज्ञाय । ज्ञावोम्रायाइ | ३६, ४२ |
| **रथन्तरम्** | (आ. गा. २. ६. ४९. १) | आभित्वाशूरनोनुमोवा | ४४, ४६, ४८ |
| रथन्तरम् | ( ,, ,, ,, ) | ,, | ,, ४४, ४६, ४८ |
| राजनम् | (आ. गा. ४. ४. १२३. १) | हिम्। (त्रिः)। हो। (त्रिः)। | ३३, ३४ |
| रैवतम् | (ग्राम. ४. ५. १६०. २) | सुरूहाहाउ | ३८ |
| वारवन्तीयम् | (ग्राम. १. २. १७. १) | आश्वा । औहो२३४वा | ४२ |
| वाराहोत्तरम् | ( ,, १५. ६. ५२४. ४) | हाउहाउ। हुप्। प्रकावियाम् | ३७ |
| वासिष्ठम् | ( ,, ७. ४. २७२. ३) | वयमेनमिदा | ३८ |
| विधर्म | ( ,, ११. ९. ४३०. १) | ओहो६वा। ओहो३वा। | ४९ |
| विशोविशीयम् | ( ,, २. ९. ८७. १) | विशोविशोहिम् स्थिवो ६ | ४२ |
| विष्णोः स्वरीयांसि | (आ. गा. १५६-१५८) | हाउहोहाइ । अन्तरिक्षं | ५१ |
| श्रत्ताष्टकम् | (ग्राम. १०. ३. ३७१. १-८) | श्रत्ते दधामि प्रथमाय | ३५ |
| सैन्धुक्षितम् | ( ,, १. ३. २१. १) | अग्निंवोवृधान्ताम् | ४१ |
| ,, | ( ,, १. ३. २१. ३) | अग्निंवः । ओहाइ | ४१ |
| सोमव्रतम् | (आ. गा. ४. १. १७५) | ओवा२ । सन्तेपया | ३७ |
| हाविष्कृतम् | (ग्राम. १३. १. ४७६, २ ?) | त्वंसुतो मदा ? | ३६ |

ॐ

## APPENDIX B.

Quotations from other works given in the text and commentaries are listed below in alphabetical oraer. Quotations found in the text are printed in bold type, while those which occur in Sāyana's commentary are marked with सा in brackets at the end. No symbol is, however, given if the quotation occurs in the commentary of Dvijarājabhaṭṭa.

| *Quotation.* | *Source.* | *Page.* |
|---|---|---|
| अथ खल्वयमार्षप्रदेशो भवति ॥ | आ. ब्रा. १. १ | ८ |
| अथ हैनं गार्हपत्योऽनुशशास ॥ | छा. उ. ४. ११. १ | ११ |
| अथेन्द्रो यौधाजयं प्रावृहत । तद्वै स वज्रं प्रावृहत । वज्रो वै यौधाजयम् ॥ | तां. ब्रा. ७. ५. १२ | ८ |
| अथैषा चन्द्रमसः क्षयवृद्धिर्भवति ॥ | ष. विं. ब्रा. ५. ६. १ | ७२ |
| अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणो वा । यथैव ते न गुरोर्भोजनीया- स्तथैव तान् न भुनक्ति श्रुतं तत् ॥ | नि. २. १. ४ | ५८ |
| अभिगीते द्विमात्रा द्वितीये प्रथमेऽध्यर्धा ॥ | सामपरिशिष्ट | ४० |
| अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम् । शिष्याणामुपदेशार्थे कुर्यात् वृत्तिं विलम्बिताम् ॥ | ना. शि. १. ९. २१ | ३१ |
| अभ्युदूहेन सर्वत्र रोहगीती रहस्यवत् ॥ | पु. सू. ९. २ | ५० |
| अयं वाव लोको हाउकारः ॥ | छा. उ. १. १३. १ | ८ |
| अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ | पा. शि. १३ | २३ |
| अहिंसन्त्सर्वतीर्थान्यन्यत्र तीर्थेभ्यः ॥ | छा. उ. ८. १५. १ | १२ |
| आप्तमस्याप्रतिगृहीतं भवति । य एवं वेद ॥ | तां. ब्रा. १३. ७. १३ | ७७ |
| आद्यन्तदर्शनस्तोभो विधागीतेषु सामसु । पादे पादेऽनुसंहार्यः सोपायो निधने भवेत् ॥ | स्तोभानुसंहारः | ३६ |

| *Quotation.* | *Source.* | *Page.* |
|---|---|---|
| आर्चिकं निधनं न्याये स्तौभिकं वा यदक्षरम् । क्रुष्टाक्रुष्टं भवेत्स्वार्यमन्तोदात्तं वृधे स्वरम् ॥ | पु. सू. ९. २ | ४९ |
| इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्याय वान्तेवासिने ॥ | छा. उ. ३. ११. ५ | ६१ |
| **इन्द्राय पवते मदः** पवमानहवींष्येतेन कल्पेन ॥ | सा. वि. ब्रा. १. ३. ३ | ७४ |
| इयमेवर्गग्निः साम तदेतदस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते ॥ | छा. उ. १. ६. १ | ३७ |
| इहकार-इडाकारौ गीतं च निधनस्वरं हीषीस्वरं च द्व्यक्षरं देवताश्चारण्येगेयेषु तान्यन्तः सामनिधनानि ॥ | ला. श्रौ. सू. ७. ८. ५ | ५० |
| उपकोशलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास । तस्य ह द्वादशवर्षाण्यग्नीन् परिचचार ॥ | छा. उ. ४. १०. १ | ६४ |
| उपसर्गाः क्रियायोगे ॥ | पा. सू. १. ४. ५९ | १९ |
| ऋगादीनामन्यतममेतेषां शक्तितोऽन्वहम् । पठन् मध्वाज्यकुल्याभिः पितॄनपि च तर्पयेत् ॥ | का. स्मृ. १४. १२ | ६० |
| ऋचः पठन् मधुपयःकुल्याभिस्तर्पयेत् सुरान् । घृतामृतौघकुल्याभिर्यजूंष्यपि पठन् सदा ॥ | का. स्मृ. १४. ९ | ६० |
| ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ॥ | ऋ. वे. ४. २३. ८ | ५८ |
| एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः । सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥ | पा. शि. ३१ | २७ |
| एष ह वै यज्ञो योऽयं पवते ॥ | छा. उ. ४. १६. १ | ११ |
| कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू । स्युर्मूर्धन्या ऋटुरषा दन्त्या ऌतुलसाः स्मृताः ॥ | पा. शि. १७ | २७ |
| कालबविनामपि प्रवचनविहितः स्वरः स्वाध्याये । तथा शाट्यायनिनाम् ॥ | पु. सू. ८. ८. | ५१ |
| कुतीर्थादागतं दग्धमपवर्णं च भक्षितम् । न तस्य परि(? पाठे)मोक्षोऽस्ति पापाहेरिव किल्बिषात् ॥ | पा. शि. ५० | २७ |

| *Quotation.* | *Source.* | *Page.* |
|---|---|---|
| कृतज्ञाद्रोहिमेधाविशुचिकल्यानसूयकाः ।<br>अध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदाः ॥ | या. स्मृ. १. २८ | ५७ |
| गीतिषु सामाख्या ॥ (सा.) | मी. सू. २. १. ३६ | ९३ |
| गुरूणामध्यधिक्षेपो वेदनिन्दा सुहृद्वधः ।<br>ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् ॥ | या. स्मृ. ३. २२८ | ६४ |
| गुर्वप्येनो न तं स्पृशेत् पङ्क्तिं चैव पुनाति सः ।<br>यं यं क्रतुं च पठति फलभाक् तस्य तस्य च ॥ | का. स्मृ. १४. १४ | ६० |
| गौषूक्तं चाश्वसूक्तं च भवतः ॥ | ता. ब्रा. १०. ४. ९ | ७७ |
| गौषूक्तिश्चाश्वसूक्तिश्च । बहु प्रतिगृह्य गरगिरावमन्येताम् । तावेते सामनी अपश्यतां ताभ्यां गरं निरघ्नताम् ॥ | तां. ब्रा. १०. ४. १० | ७७ |
| जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः ।<br>ए-ऐ तु कण्ठ्यतालव्या ओ-औ कण्ठोष्ठजौ स्मृतौ ॥ | पा. शि. १८ | २७ |
| तं देवा दिव्येन पात्रेण आदित्याः प्रथमं पञ्चकलं पञ्चमीं भक्षयन्ति । तेऽन्तरिक्षेण पात्रेण रुद्रा द्वितीयं पञ्चकलं दशमीं भक्षयन्ति । ते पृथिव्या पात्रेण वसवस्तृतीयं पञ्चकलं पञ्चदशीं भक्षयन्ति ॥ | ष. विं. ब्रा. ५. ६. २ | ७२ |
| तद्देवा यशो व्यभजन्त तस्याग्नी रौरवं प्रावृहत ॥ | ता. ब्रा. ७. ५. ७ | ८ |
| तद्धैतद्ब्रह्मा प्रजापतये उवाच । प्रजापतिर्मनवे मनुः प्रजाभ्यः तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ॥ | छा. उ. ३. ११. ४ | ६१ |
| तद्वै स पशुवीर्यं प्रावृहत । पशवो वै रौरवम् ॥ | तां. ब्रा. ७. ५. ८ | ८ |
| तमुपनीय कृशानामबलानां चतुःशता गा निराकृत्योवाचेमाः सोम्यानुसंव्रजेति । ता अभि प्रस्थापयन् उवाच । नासहस्रेणावर्तेयेति । स ह वर्षगणं प्रोवास । ता यदा सहस्रं संपेदुः ॥ | छा. उ. ४. ४. ५ | ६४ |

| Quotation. | Source. | Pag |
|---|---|---|
| तरति स पापं सर्वं मन्द्री यस्तौति धावति । गच्छ-त्यूर्ध्वां गतिम् ॥ | नि. १३. १. ६ | ७ |
| तारं तार्तीयसवनम् ॥ | पा. शि. ८ | १ |
| ते तृप्तास्तर्पयन्त्येनं जीवन्तं प्रेतमेव च । कामचारी च भवति सर्वेषु सुरसद्मसु ॥ | का. स्मृ. १४. १३ | ६ |
| त्रयो दीर्घास्तु विज्ञेया ये च संध्यक्षरेषु वै ॥ मन्या पथ्या न इन्द्राभ्यां शेषा ह्रस्वाः प्रकीर्तिताः ॥ | ना. शि. २. २. ३ | ५ |
| त्रिरुपांश्वाह देवेभ्य एवैनं प्राह ॥ (सा.) | तै. सं. ६. १. ४. ३ | १ |
| त्रीन् प्रथमायां रोहति । भूतं भवद्भविष्यत्तानेवावरुन्धे ॥ | तां. ब्रा. ७. ७. ७ | ३९ |
| दीर्घकम्पनस्य वृद्धिः ॥ | पु. सू. ८. ५ | ४२ |
| दुर्बलस्य यथा राष्ट्रं हरते बलवान् नृपः । दुर्बलं व्यञ्जनं तद्वद्धरते बलवान्स्वरः ॥ | ना. शि. २. ४. ४ | ४९ |
| विषुवति वातवानुत्तिष्ठति । समापयति दृतिः ॥ | तां. ब्रा. २५. ३. ६ | ३६ |
| ध्वस्ने वै पुरुषन्ती तरन्तपुरुमीढाभ्यां वै तदश्विभ्यां सहस्राण्यदित्सतां तावैक्षतां कथं नाविदमात्त-मप्रतिगृहीतं स्यादिति । तौ प्रत्येताम् । ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे तरत्स मन्दी धावति (सा. १०५७–१०६०) इति । ततो वै तत्तयोरात्तमप्रतिगृहीतमभवत् ॥ | तां. ब्रा. १३. ७. १२ | ७७ |
| न तां समीरयेद्वाचं या प्राणमुपधारयेत् । प्राणानामुपरोधेन वैस्वर्यं चोपजायते ॥ | ना. शि. २. ८. ९ | २१ |
| नवमस्य ज्योतिष्टोमः पर्यासः ॥ | ला. श्रौ. सू. ३. २. २६ | ५४ |
| नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इति । एतदेव ततो भूयः ॥ | छा. उ. ३. ११. ६ | ६१ |
| ते ह सप्तदशेभ्य एवाध्युत्तस्थुः ॥ | तां. ब्रा. २५. ६. ५ | ३६ |

| *Quotation.* | *Source.* | *Page.* |
|---|---|---|
| पञ्चविधं कर्षणम् । आद्वितीयकर्षणम् । आतृतीयकर्षणम् । आचतुर्थकर्षणम् । आमन्द्रकर्षणम् । मन्द्रश्चातिस्वार्यात् कृष्यते ॥ | छन्दोगपरिशिष्ट | ३८ |
| पदं पादं विधां मात्रां छन्दो विज्ञाय दैवतम् । आर्षं च ब्राह्मणं चैव ततः साम प्रयोजयेत् ॥ | ,, ,, | ६६ |
| परः संनिकर्षः संहिता ॥ (सा.) | पा. सू. १. ४. १०९ | १३ |
| परोक्षप्रिया इव हि देवाः ॥ (सा.) | बृ. आ. उ. ४. २. २ | १५ |
| पशवो वै रौरवम् । पशुमान् भवति । य एवं वेद ॥ | तां. ब्रा. ७. ५. ९ | ८ |
| पुरुषो वाव यज्ञः ॥ | छा. उ. ३. १६. १ | ११ |
| पूर्वाङ्गेण हृतं पूर्वं पराङ्गेण तु धारितम् । व्यञ्जनेन द्विधा भिन्नः स्वरो भीतस्तु कम्पते ॥ | लो. शि. १. ४ | ५३ |
| प्रथमं त्रिवर्गं नवकृत्वो नवकृत्वो गायेदेवं सदा प्रयुञ्जानोऽग्न्याधेयमवाप्नोति ॥ | सा. वि. ब्रा. १. ३. २ | ७४ |
| प्रजापतिर्लोकानभ्यतपत् ॥ | छा. उ. ४. १७. १ | ११ |
| प्रजापतिर्वा इदमेक आसीत् । तस्य वागेव स्वमासीद् वाग् द्वितीया । स ऐक्षतेमामेव वाचं विसृजा ॥ | तां. ब्रा. २०. १४. २ | ७५ |
| प्रजापतिर्वा इदमेक आसीन्नाहरासीन्न रात्रिरासीत् ॥ | तां. ब्रा. १६. १. १ | ७५ |
| प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनानि भक्तयः ॥ | पञ्चविधसूत्र १. १. १ | ३३ |
| प्राक् प्रतिहाराश्च चतुरक्षरं शिष्ट्वा ॥ | ला. श्रौ. सू. ६. १०. २२ | ४४ |
| बट् श्रत् सत्रा ॥ | नि. ३.१० | ६२ |
| बल्ववद्देयं वज्रमेवं प्रवृत्तं प्रत्युद्गृह्णाति ॥ | तां. ब्रा. ७. ७. १० | ४४ |
| बल्बलाकुर्वता गेयमभिलोभयतेव वज्रमेवाभिलोभयति ॥ | तां. ब्रा. ७. ७. ११ | ४४ |
| मध्ये निधनानि निगदवृत्तीनि प्रयोगवत् स्वाध्याये ॥ | पु. सू. ८. ८ | ५० |
| मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ | ना. शि. १. ५ | ३९ |

| *Quotation.* | *Source.* | *Page.* |
| --- | --- | --- |
| मांसक्षीरौदनमधुकुल्याभिस्तर्पयेत् पठन् । वाकोवाक्यपुराणानि इतिहासानि चान्वहम् ॥ | का. स्मृ. १४. ११ | ६० |
| माध्यंदिने वै पवमाने देवा यज्ञायज्ञीयेन यज्ञं संस्थाप्य स्वर्गं लोकमारोहन् ॥ | तां. ब्रा. १५. ९. १४ | ३६ |
| मृत्युं तरति पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते । यश्चैनमेवं वेद ॥ | श. ब्रा. ३ २. ६. १ | ८ |
| य आतृणत्त्यवितथेन कर्णाविदुःखं कुर्वन्नमृतं संप्रयच्छन् । तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत् कतमच्च नाह ॥ | नि. २. १. ४ | ५८ |
| यथैतच्चतुर्थमन्द्रातिस्वार्याणां स्वराणां द्यन्तरमुच्चमुदूहः ॥ | पु. सू. ८. ५ | ५० |
| यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन् मनुते । श्रद्दधदेव मनुते । श्रद्धा त्वेव विजिज्ञासितव्या ॥ | छा. उ. ७. १९. १ | ६३ |
| यदेव बहु प्रतिगृह्णाति यद्गरं गिरति यदनन्नमत्ति तदेताभ्यां निर्हते ॥ | तां. ब्रा. १९. ४. ११ | ७७ |
| यदेव बहु प्रतिगृह्णाति । यद्गरं गिरति । यदनन्नमत्ति । यदशुद्धो मन्यते । तदेताभ्यां शुद्धयति ॥ | तां. ब्रा. १९. ४. ८ | ७७ |
| यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति – गर्तं वा पद्यति प्र वा मीयते पापीयान् भवति । यातयामान्यस्य छन्दांसि भवन्ति अथ यो मन्त्रे मन्त्रे वेद सर्वमायुरेति श्रेयान् भवति । अयातयामान्यस्य छन्दांसि भवन्ति । तस्मादेतानि मन्त्रे मन्त्रे विद्यात् ॥ | आ. ब्रा. १. १. ६ | ६६ |
| वज्रेण वा एतत् प्रस्तोतोद्गातारमभिप्रवर्तयति यद्रथन्तरं प्रस्तौति । समुद्रमन्तर्धायोद्गायेद्गागित्यादेयम् । वाग्वै समुद्रः । समुद्रमेवान्तर्दधात्यहिंसायै ॥ | तां. ब्रा. ७. ७. ९ | ४४ |
| वज्रो वै यौधाजयम् । वज्रं भ्रातृव्याय प्रहरति । य एवं वेद ॥ | तां. ब्रा. ७. ५. १३ | १३ |

| *Quotation.* | *Source.* | *Page.* |
|---|---|---|
| वसुपूर्णा वसुमती त्रिर्दानफलमाप्नुयात् । ब्रह्मयज्ञादपि ब्रह्मदानमेवातिरिच्यते ॥ | का. स्मृ. १४. १५ | १६ |
| वायव्या द्रुता वृत्तिर्बार्हस्पत्या मध्यमा सौरी विलम्बिता ॥ | छन्दोगपरिशिष्ट | ३१ |
| विद्या ह वै ब्राह्मणमाजगाम । गोपाय मा शेवधिष्टेऽहमस्मि । असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम् ॥ | नि. २. १. ४ | ५७ |
| विनतं प्रथमादि द्वितीयान्तम् । द्वितीयादि तृतीयान्तं प्रणतम् । उत्स्वरितं चतुर्थादि मन्द्रान्तम् । अभिगीतं द्वितीयादि प्रथमान्तम् । तथा विनत-प्रणतयोरन्तेऽर्द्धमात्रा नीचेन स्वरेण भवति । उच्चेऽध्यर्धा दीर्घा । ह्रस्वेऽर्धम् ॥ | छन्दोगपरिशिष्ट | ४० |
| विरला नाङ्गुलीः कुर्यान्मूले चैना न संस्पृशेत् । अङ्गुष्ठाग्रेण ता नित्यं मध्यमे पर्वणि स्पृशेत् ॥ | ना. शि. १. ६. ६ | २८ |
| वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं तपः । प्रदानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥ | दक्षस्मृतिः २. ३९ | ६४ |
| व्यञ्जनमपराङ्गं विरामे लुप्यते ॥ | पु. सू. ७. ५. | ३९ |
| व्यवहिताश्च ॥ | पु. सू. १. ४. ८२ | १९ |
| शुद्धाशुद्धीये भवतः ॥ | तां. ब्रा. १९. ४. ६ | ७७ |
| श्रुत्ताष्टके (ग्राम. १०.३.३७१.१-८) प्रयुञ्जानः प्रथमेन हिरण्यं लभते । द्वितीयेन धान्यम् । तृतीयेन पशून् । चतुर्थेन पुत्रान् । पञ्चमेन ग्रामान् । षष्ठेन यशः । सप्तमेन ब्रह्मवर्चसम् । अष्टमेन स्वर्गं लोकम् ॥ | सा. वि. ब्रा. ३. २. ५ | ३५ |
| श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः । श्रद्धां भगस्य मूर्द्धनि वचसा वेदयामसि ॥ | ऋ. वे. १०. १५१. १ | ६३ |
| सर्वे निधनमुपेयुः ॥ | द्रा. श्रौ. सू. २. २. १० | ४९ |
| सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो यदुच्यते ॥ | दे. अ. ब्रा. ३. २४ | ७६ |

| Quotation. | Source. | Page. |
|---|---|---|
| सामान्यपि पठन् सोमघृतकुल्याभिरन्वहम् । मेदःकुल्याभिरपि च अथर्वाङ्गिरसः पठन् ॥ | का. स्मृ. १४. १० | ६० |
| सुब्रह्मण्यसाम सुब्रह्मण्योऽम् ॥ | द्रा. श्रौ. सू. १. ३० | ५१ |
| सुवर्महाः सुवर्मया इत्येताभ्यां दर्शपूर्णमासावेतेनैव कल्पेन ॥ | सा. वि. ब्रा. १. ३. ४ | ७४ |
| सुतीर्थादागतं व्यक्तं स्वाम्नाय्यं सुव्यवस्थितम् । सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्म राजते ॥ | पा. शि. ५१ | २७ |
| सोऽशुद्धोऽमन्यत । स एते शुद्धाशुद्धीये अपश्यत् । ताभ्यामशुद्ध्यत् ॥ | तां. ब्रा. १९. ४. ७ | ७७ |
| स्थाणुरयं भारहरः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥ यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥ | नि. १. ६. १८ | ६३ |
| स्वरः उच्चः स्वरो नीचः स्वरः स्वरित एव च । व्यञ्जनान्यनुवर्तन्ते तत्र तिष्ठति स स्वरः ॥ | ना. शि. २. ५२ | ४७ |
| स्वरप्रधानं वै (त्रै ?) स्वर्यमाचार्याः प्रतिजानते । मणिवद् व्यञ्जनं विद्यात् सूत्रवच्च स्वरं विदुः ॥ | ना. शि. २. ५. ३ | ४७ |
| स्वरस्य वै (त्रै ?) स्वर्यं न व्यञ्जनस्य । स्वरश्च स्वर्यते । | छन्दोगपरिशिष्ट | ४७ |
| हस्तौ सुसंयुतौ धार्यौ जानुभ्यामुपरिस्थितौ । गुरोरनुकृतिं कुर्याद्यथा ज्ञानमतिर्भवेत् ॥ | ना. शि. १. ६. ३ | २७ |

ॐ

# APPENDIX C.

## GLOSSARY

Explanation of technical words, or words of special significance as given in the commentaries is given hereunder. When no explanation is given in the commentaries the same is supplied in brackets. Explanation from *Sāyaṇa* is marked with (S) while the same from Dvijarājabhaṭṭa is left un-marked.

| *Word.* | *Explanation.* | *Page.* |
|---|---|---|
| अदीनतमा | या .... अदीनस्वरेण अतीव बहुलं प्रयुज्यते सा (संहिता) ॥ अतिशयितस्वरा शिरोगतेन स्वरेण उच्चैस्तरामुच्चार्यमाणा ॥ (S) | २३ |
| अदुःस्पृष्टा | अस्थानोच्चरितस्वरव्यञ्जनात्स्यैर्वर्णैः अधीयत इति दुःस्पृष्टा । तद्विपरीता अदुःस्पृष्टा ॥ | २६ |
| अनाकाशीकरणम् | प्राप्तायाः विद्यायाः असच्छिष्याय अप्रकाशीकरणम् ॥ | ६४ |
| अनिर्भुजा | जानुबाह्यनिर्गतभुजद्वयेन हस्तद्वयेन अधीयत इति निर्भुजा । जानूपरिस्थितेन हस्तद्वयेन प्रयुज्यमाना ॥ | २७ |
| अनुपगृहीतानि | उपग्रहरहितानि .... अविकृतानि | ४१ |
| अप्रजसौ | पुत्रपौत्राद्यपत्यरहितौ | ४७ |
| अभिगीतम् | अभिगीतं द्वितीयादि प्रथमान्तम् (स्वरविशेषः) | ४० |
| अमित्रह्वः | अमित्रान् चोरादिहिंसाकर्तॄन् आह्वयतीति अमित्रह्वः । यया प्रयुज्यमानया संहितया अत्यन्तमशुभं मृत्युसमानं फलं जायते । अनेन व्याख्यानेनेदमुक्तं भवति । अमित्राः चोरादयः तस्य आर्त्तिं सर्वे गृह्णन्ति ॥ (*see* मित्रह्वः for Sayana's explanation.) | १९ |
| अमुक्तम् | अङ्गुष्ठतर्जनीमध्यमाभिरेव पठितम् | ३७ |
| अवध्यायिनौ | अव अधस्तात् वर्तमानलोकप्रापककर्मध्यानरतौ । | ४७ |
| अविसृष्टानि | अवृद्धानि । यद्वा अक्षराणि ह्रस्वदीर्घविशिष्टानि | ४१ |

| *Word.* | *Explanation.* | *Page.* |
|---|---|---|
| असंयता | अन्यचित्तेन अप्रयत्नेन पठिता ॥ (स्पृष्टकरणादिभिः प्रयत्नैः सम्यङ् न नियमिता ॥ (S)) | २५ |
| असंसृष्टा | अस्थानोच्छ्वासविच्छेदेन विरामेण च प्रयुक्ता ॥ | २४ |
| असंपूर्णा | स्वरव्यञ्जनाद्यैर्न्यूना ॥ | २४ |
| असुरसंहिता (सर्वप्रत्यक्षा) | असुरास्तु तावद् देहावसानपर्यन्तं स्वाध्यायतपश्चरणादिभिरैहिक ग्राम्यं प्रत्यक्षमेवेहन्ते । अतो ग्राम्यप्रत्यक्षफलेप्सवो वेदविक्रेतारो दुर्जननीचवर्णश्रावणकर्तारो ब्राह्मणा अपि असुरसमानाः प्रदर्शिताः । जीवन्तोऽप्यसुरसमानाः । (तादृशी असुरसंबन्धिनी संहिता)<br>असुरसंबन्धिनी संहिता (S) (*see* also सर्वप्रत्यक्षा) | १५ |
| आत्तकर्षणम् | आत्तकर्षणशब्देन आत्तस्वरः समासस्वरः । अतिस्वार इति यावत् ॥ | ४२ |
| आनुदेशिक्यौ | आर्चिकसमुदायस्य मन्त्रलक्षणमनुदेशमनुसृत्य प्रवर्तेते इति आनुदेशिक्यौ । .... संहिते वेयगानारण्यगानविशिष्टे ॥ | ४८ |
| उत्सृष्टा | अतीव उच्चस्वरेण वर्तमाना । अथवा उच्चनीचस्वरभेदवर्जिता अन्यथा प्रयुक्ता उन्नीता ॥ (S) | २४ |
| उत्सेधपरोक्षवृद्धा | उत्सेधा चासौ परोक्षा च उत्सेधपरोक्षा । उत्सेधपरोक्षा चासौ वृद्धा च उत्सेधपरोक्षवृद्धा । उत्सेधेति किंचिदधिकेति एककालाधिकया मात्रया अधीता उत्सेधा भवतीत्ययमाशयः । परोक्षा च वृद्धा च उक्तार्थौ । एवमुक्तप्रकारेण अधीता उत्सेधपरोक्षवृद्धा भवतीति सिद्धार्थः ॥<br>उत्सेधः यो व्यञ्जनानां बहूनां संयोगस्तस्मिन् परतो यदक्षरं परोक्षवृद्धं स्वभावत एकमात्रमपि गुरुसंज्ञित्वाद् द्राघिष्ठं भवति तादृशमक्षरं यस्याः सा उत्सेधपरोक्षवृद्धा अग्नेः संहिता भवति ॥ (S) | ३० |

| *Word.* | *Explanation.* | *Page.* |
|---|---|---|
| उदूहन्ति | उच्चैः कुर्वन्ति ॥ | ४९ |
| उदूहम् | तृतीयप्रभृतीनां प्रतिलोमवर्तमानानां तृतीयद्वितीय-प्रथमस्वराणां मध्ये यः कश्चिदुदात्ततमः स्वरः आचार्याः तमुदूहं मन्यन्ते ॥ | ५० |
| —उपग्रहः | विकारः ॥ | ४१ |
| —उपस्तवः | आचार्यस्य स्तवनम् ॥ | ६२ |
| उपस्पर्शनात् | तदुत्पन्नपरमपवित्रशकृन्मूत्रोपस्पर्शनात् गोसुखकारि-कण्डूयनादिभक्तेश्च ॥ | ७१ |
| क्षोधुकौ | क्षुत्तृट्परीतौ चौरादिभयाद्युपद्रवौ च ॥ | ४७ |
| गाथादर्शी | यः छन्दोदैवतादिभिः असंपूर्णं न्यूनं पश्यति स गाथा-दर्शी भवति दारवीवीणोत्पन्नगानप्रयोगीत्यर्थः ॥ | ६६ |
| गुल्मीभूता | प्रौढो गुल्मवृक्षः स यथा लतादिभिर्वेष्टितो भवति तथा उरस्येव वेष्टिता कर्णादिस्थानमप्राप्ता मन्द्र-स्वरेणोच्चार्यमाणेत्यर्थः ॥ | ३४ |
| दमः | सावित्रादिमहानम्न्यन्तैः व्रतैः शरीरदमः ॥ | ६२ |
| देवसंहिता | देवस्य जगत्स्रष्टुः परमतुष्टिकरी भवति ॥ | १४ |
| देवहूः | देवान् ह्वयति आह्वयति इति देवहूः । अयमाशयः। यया संहितया इन्द्रादयो देवास्तदध्ययनं श्रोतुं तदध्येतारमीक्षितुं तत्समीपमागच्छन्तीति ॥ देवाह्वानशीला ॥ (S) | १८ |
| ,, | मन्द्रस्वरेणोच्चार्यमाणा ॥ उरसा उच्चार्यमाणः स्वरो मन्द्रस्वरः तद्वती संहिता देवहूः ॥ (S) | १९ |
| निगदः | निगद्यते ज्ञानमनेनेति निगदः । अथवा निर्गतः अविद्यालक्षणो गदो व्याधिरस्मात् निगदः ॥ | ५७ |

| *Word.* | *Explanation.* | *Page.* |
| --- | --- | --- |
| परोक्षप्रत्यक्षा (ऋषि-संहिता) | परोक्षे रहसि परमार्थेऽप्यधीयाना संहिता कदाचिदवसरप्राप्तौ स्वधर्मनिरतानां ब्राह्मणानां यज्ञादिसिद्धये तारं तार्तीयसवनम् इत्येतदादिवाक्यैरुच्चैरधीयत इति एतद्विषये परोक्षप्रत्यक्षा ॥ उक्तरूपद्वयोपेता मध्यमस्वरेण प्रयुक्ता ॥ (S) | १६ |
| पूर्णखेन | पूर्णं च तत् खं च पूर्णखम् । खम् अन्तरिक्षम् । कैः पूर्णम्? चन्द्रग्रहनक्षत्रैः । तद्वद्रथः पूर्णखः । ईषामारभ्य धूःपर्यन्तं सुवर्णरजताद्यैर्धातुभिर्विचित्रितः पूर्णखमिव राजते । अतः पूर्णखः ॥ चक्रस्य विवरमाक्षेदनेन पूर्णं यस्य स तथोक्तः तेन । अपूर्णखो हि रथो निम्नोन्नतदेशगमने भग्नाक्षो भवेत् । अयं तद्वैलक्षण्यात् परप्राप्तये संपद्यते इत्यर्थः ॥ (S) | २९ |
| —प्रणामितम् | प्रणामितशब्देन प्रणतम् । द्वितीयादितृतीयान्तं प्रणतम् ॥ | ४० |
| प्राच्यपाञ्चालीषु | अत्र प्राचिशब्देन प्राञ्चः अनुलोमाः पञ्चविधकर्षणभूताः स्वराः अपाञ्चशब्देन अपाञ्चः अष्टविधप्रत्युत्क्रमभूताः प्रतिलोमाः स्वराः । तेषां प्राच्यपाञ्चानां प्राङ्ङपाङ्स्वराणाम् आलयः स्थानं या अङ्गुलयः ताः प्राच्यपाञ्चालयः । तासु....॥ | ३७ |
| मन्त्रदर्शी | यः अध्ययनकर्ता त्रिभिः प्रकारैः वेदोक्तं कर्म संपूर्णं समृद्धं पश्यति स एवाध्ययनकर्मकर्ता मन्त्रदर्शी भवति ॥ | ६५ |
| मित्रहूः | मित्राणां सखीनामाह्वानशीला ॥ (S) | ३८ |
| ,, | मित्राणानामाह्वानशीला । तेषु च गृहमागतेषु तत्रत्यं धनमुपभोगेन क्षीयते ...ो यद्यप्येषा मित्रहूरिति नाम्ना श्रेयसी तथापि फले दुष्टा ॥ (S) | |

| *Word.* | *Explanation.* | *Page.* |
|---|---|---|
| मुक्तम् | सर्वासु अङ्गुलीषु मुक्तं न्यस्तं प्रयुक्तं गानम् ॥ | ३७ |
| योगः | प्राप्तया विद्यया सह सदैव (अवस्थानम्) ॥ | ६४ |
| रोहः | द्वितीयस्वरादारभ्य आ चतुर्थस्वरं कृष्यते । तस्य रोहसंज्ञा ॥ | ३९ |
| वाक्शबहूः | क्वबितमिव निरुदितया संहितया उच्चार्यते सा वाक्शबहूर्ज्ञेया । क्वबितमिति बल्बलकारवर्णैः अविस्पष्टाक्षरैः । ग्रस्तव्यस्तैरित्यर्थः । निरुदितमिति निकृष्टम् । निरुदितमिव यस्तथाधीते । बल्बलाकारमिव निकृष्टरुदितमिव अध्ययनं करोति ॥ | २० |
| " | या संहिता क्वबितमिव म्लानाक्षरा क्षीणाक्षरा भवति । तथा निरुदितमिव रोदनसदृशी भवति सा वाक्शबहूर्नाम संहिता ॥ (S) | २१ |
| वित्तिः | विद्यते अनयेति वित्तिः । प्रज्ञेत्यर्थः ॥ | ६२ |
| विनामितम् | विनामितशब्देन विनतम् । विनतं द्वितीयादि प्रथमान्तम् ॥ | ४० |
| विप्रवाकः | प्रयोगः ॥ | ४२ |
| वृद्धा | See सर्ववृद्धा | ३० |
| शुद्धा | स्नानाचामनशुद्धप्रदेशासनपुरःसरम् अधीयत इति शुद्धा ॥ | २६ |
| श्रद्धा | विद्याध्ययनश्रद्धा आचार्यभक्तिश्रद्धा च । .... श्रच्छब्देन सत्यमुच्यते । श्रत् सत्यं दधातीति श्रद्धा ॥ | ६२ |
| संयता | अनन्यचित्तेन प्रयुज्यमाना स्पृष्टकरणादिभिः प्रयत्नैः सम्यङ् नियमिता ॥ (S) | २२ |
| संसृष्टा | अस्थानोच्छ्वासविच्छेदरहिता ॥ ताल्वादिभिः स्थानैः संयोजिता ॥ (S) | २२ |

| Word. | Explanation. | Page. |
| --- | --- | --- |
| संहिता | अध्यापकाध्येतॄणां सम्यक् हितकर्यः संहिताः । अथवा संततप्रकारेण द्विपदावसानेनैव अधीयानाः संहिताः । अथवा उपवीतानन्तरं शरीरावसानपर्यन्तं संततमधीयन्त इति संहिताः ॥ | १२ |
| ” | (क्रुष्टादिस्वराणां) यः संनिकर्षः सा संहिता ॥ (S) | १३ |
| ” | प्रस्तोतृद्गातृप्रतिहर्तॄणां यज्ञकर्तॄणाम् एकैकस्य या या भक्तिः सा अविरामा प्रयोक्तव्या । एतस्मिन्नर्थे संहिताशब्दः सार्थको भवति ॥ | ३३–३४ |
| समञ्जनवता (रथेन) | सम्यग् अञ्जनम् समञ्जनम् । समञ्जनं विद्यते यस्मिन् असौ समञ्जनवान् । .... अत्र अञ्जनशब्देन रथचक्रपरिवर्तमानोपहाराः सूत्रघृतादयो ज्ञेयाः ॥ | २८ |
| समानपुरुषवचने | समानाश्च ते पुरुषाश्च समानपुरुषाः । स्तोत्रगतसाम प्रयोगे साधारणा उद्गातारः इत्यर्थः । तेषां वचनं समानपुरुषवचनं निधनमित्यर्थः ॥ | ४९ |
| समावर्तनीया | सम्यगावर्तनीया । समावर्त्य समावर्त्य प्रयोक्तव्या ॥ | ३४ |
| समाहितेन (रथेन) | समाहिताः आरोपिताः स्थापिता भक्ष्यायुधादयः मार्गोपस्काराः एकस्मिन्नसौ समाहितः । तेन कृतसमाधानेन जीर्णं चक्रयुगादिकमवयवं परित्यज्य अभिनवीकृतेन ॥ | ३० |
| संपूर्णा | ह्रस्वदीर्घप्लुतभेदैर्न्यूनातिरिक्तदोषरहिता ॥ स्वरैरक्षरैश्च संपूर्णा ॥ (S) | २३ |
| संप्रश्नः | अधीतस्य संशयविच्छेदार्थं सम्यक् प्रश्नः संप्रश्नः । अथवा अधीतस्य अर्थविज्ञानार्थं संप्रश्नः ॥ | ६२ |
| संप्रसारयन्ति | सम्यक्प्रकारेण विस्तारयन्ति । नानास्वरेषु विस्तरणं संप्रसारणम् ॥ | ४८ |

| *Word.* | *Explanation.* | *Page.* |
|---|---|---|
| सर्वपरोक्षा (देव-संहिता) | सर्वेभ्यः जनेभ्यः परोक्षं रहसि एकान्ते अधीयते इति सर्वपरोक्षा । अथवा सर्वस्याः संहितायाः परोक्षं पारलौकिकं फलमुद्दिश्य अधीयते इति .... ॥ सर्वैः समीपस्थैः दूरस्थैश्चाश्रूयमाणत्वात् परोक्षा । अक्षाणामिन्द्रियाणां परस्तात् वर्तमाना । उपांशु प्रयुज्यमानेत्यर्थः ॥ (S) | १४ |
| सर्वप्रत्यक्षा (असुर-संहिता) | सर्वेषां सज्जनानां दुर्जनानां च शूद्रादीनां च वर्णानां तत्समक्षमधीयत इति सर्वप्रत्यक्षा । अथवा सर्वस्याः संहितायाः ग्राम्यं प्रत्यक्षमाधुनिकमशन-द्रव्यादिकमुद्दिश्य अधीयत इति सर्वप्रत्यक्षा ॥ समीपवर्तिनां दूरवर्तिनां च इन्द्रियपथे वर्तमाना सर्वैरपि श्रूयमाणा । शिरोगतेन स्वरेण प्रयुक्ते-त्यर्थः ॥ (S) | १५ |
| सर्ववृद्धा | ह्रस्वदीर्घप्लुतभेदैः वर्णैर्यथोक्तमात्रैरधीता ॥ | ३१ |
| ,, | सर्वाण्यक्षराणि वृद्धानि त्रिमात्रकाणि यस्याः सा ॥ (S) | ३२ |
| सर्वावृद्धा | एककालीनया मात्रया अधीता अवृद्धा ॥ | ३१ |
| ,, | सर्वाण्यवृद्धान्येकमात्राणि यस्याः सा ॥ (S) | ३२ |
| सलोकः | सपरिवर्गः ॥ | ७० |

ॐ

# INDEX

Words from compounds are split and listed in their alphabetical sequence. The hyphen at the end, beginning or at both the ends of a word indicates the position of the word in the compound. Technical names and proper nouns are not split. Words from quotations in the text are printed in bold type. References are to page numbers.

## अ

## श



## ष



## स

INDEX



ह

# विषयानुक्रमणिका

ॐ

# वंशब्राह्मणम्

## श्रीसायणाचार्यविरचितेन वेदार्थप्रकाशेन समन्वितम्

## प्रथमः खण्डः

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थं महेश्वरम् ॥ २ ॥ 5

तत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः ।
आदिशत् सायणाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥

ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुः सायणाचार्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥

व्याख्यातावृग्यजुर्वेदौ सामवेदेऽपि संहिता । 10
व्याख्याता ब्राह्मणस्याथ व्याख्यानं संप्रवर्तते ॥ ५ ॥

अष्टौ हि ब्राह्मणग्रन्थाः प्रौढं ब्राह्मणमादिमम् ।
षड्विंशाख्यं द्वितीयं स्यात् ततः सामविधिर्भवेत् ॥ ६ ॥

आर्षेयं देवताध्यायो भवेदुपनिषत्ततः ।
संहितोपनिषद्वंशो ग्रन्था अष्टावितीरिताः ॥ ७ ॥ 15

---

2. B. om. the verse वागीशाद्याः......गजाननम् ॥; A om. all the introductory verses as also the passages preceding the text and begins with संहितोपनिषद्विवरणानन्तरं वंशब्राह्मणं व्या[क]र्तुं प्रतिजानीते-"**नमो ब्रह्मणे ... वैश्रावणाय च**" इति ।

प्रौढादिब्राह्मणान्यादौ सप्त व्याख्याय चान्तिमम् ।
वंशाख्यं ब्राह्मणं विद्वान् सायणो व्याचिकीर्षति ॥ ८ ॥

अस्मिन् ब्राह्मणे कृत्स्नसामवेदाध्येतॄणां प्रवृत्तिरुच्युत्पादनाय संप्रदाय-
प्रवर्तका ऋषयः प्रदश्य (दर्श्य?) न्ते । तत्र प्रथमं सर्वत्र ग्रन्थादौ परापरगुरु-
5 नमस्कारः कर्तव्य इति सूचयितुं ब्रह्मादिपरापरगुरुनमस्कारं दर्शयति —

**नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नम आचार्येभ्यो नम ऋषिभ्यो नमो देवेभ्यो नमो वायवे च मृत्यवे च विष्णवे च नमो वैश्रवणाय च ॥ १ ॥**

**नमो ब्रह्मण** इति । ब्रह्मणे महते स्वयंभुवे चराचरात्मकस्य सर्वस्य
10 जगतो विधात्रे **नमो** नमस्कारो भवतु । तथा **ब्राह्मणेभ्यः** ब्रह्मणा वेदेनानन्तेन
चेष्टन्ति (°न्ते?) नित्यनैमित्तिकादीनि कर्माणि कुर्वन्तीति ब्राह्मणाः । यद्वा ।
ब्रह्म अधीयते विदन्ति वा ब्राह्मणाः; ब्रह्मणोऽपत्यानि वा ब्राह्मणाः, तेभ्यो
**नमः** । देवेभ्योऽपि पूर्वं ब्राह्मणनमस्कारः तेषां ब्राह्मणाधीनत्वप्रदर्शनार्थः ।
तथा तैत्तिरीया आमनन्ति — **यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे
15 वसन्ति । तस्माद् ब्राह्मणेभ्यो वेदविद्भ्यो दिवेदिवे नमस्कुर्यान्नाश्लीलं
कीर्तयेदेता एव देवताः प्रीणाति** ॥ (तै. आ. २. १५. ९) स्मरन्ति च —

**दैवाधीनं जगत्सर्वं मन्त्राधीनं तु दैवतम् ।**
**तन्मन्त्रं ब्राह्मणाधीनं ब्राह्मणो मम देवता ॥**

इति । तथा च **आचार्येभ्यः** —

20 **उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।**
**सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥** (मनु. २. १४०)

इत्युक्तलक्षणा आचार्यास्तेभ्यो **नमः** । तथा **ऋषिभ्यो नमः** ऋषिभ्यः
23 अतीन्द्रियार्थदर्शिभ्यः सामवेदद्रष्टृभ्यो गौतमादिभ्यो नमः । तथा दीव्यतीति

9. Before नमो° A adds वंशानुकरणं कुर्वन् ब्रह्मादिभ्यो नमस्करोति; A. इत्यादिना for इति.

11. SPC. चेष्टेन for चेष्टन्ते.

19. C. om. च.

23. S. °प्रष्टृभ्यो° for °द्रष्टृभ्यो°.

देवाः [तेभ्यः] द्योतनादिगुणयुक्तेभ्य इन्द्रादिभ्यो **नमः** । **वायवे च** सर्वजगत्प्राण-भूताय देवाय **नमः** । **मृत्यवे** सर्वजगतः संहर्त्रे एतन्नामकाय देवाय नमः । **विष्णवे च** सर्वव्यापकाय परमात्मरूपाय नमः । तथा **वैश्रवणाय** देवाय **नमः** । विश्रवणस्यापत्यं वैश्रवणः । **शिवादिभ्योऽण्** (पा. ४. १. ११२) इत्यण् । यद्यपि **नमो देवेभ्य** इत्यनेनैव वाय्वादीनामपि नमस्कार उक्तस्तथापि पृथङ्-निर्देशोऽत्र तेषां प्राधान्यप्रदर्शनार्थः । प्राधान्यं च तेषां जगन्निर्वाहकत्वात् ॥ १ ॥

उपजायत शर्वदत्ताद् गार्ग्यात् [शार्वदत्तो गार्ग्यः] ॥ २ ॥

एवं परापरगुरुनमस्कारं दर्शयित्वा इदानीं संप्रदायप्रवर्तकान् ऋषीन् दर्शयितुम् उपक्रमते — **उपजायते**ति । उपसर्गवशादर्थान्तरम् । **साङ्गं** साम-वेदमध्यैष्ट । ब्राह्मणानां द्विजत्वं जन्मद्वयेन भाव्यम् । एकं जन्म शुक्लशोणित-संभूतम् । ऋतुमात्रासंयुक्तं शुक्लं शरीरं जनयति । तत् प्रथमं जन्म । द्वितीयं तु विद्याजन्म । माता गायत्री पिता ह्याचार्यः ॥ आचार्यपरंपरामाह — **शर्वदत्ताद् गार्ग्यात् श[ा]र्वदत्तो गार्ग्यः** इत्यारभ्य **अनुक्रामेद् वंशमा ब्रह्मणः** (३.१) [इत्यन्ताम्] । **गार्ग्यात्** गर्गस्य गोत्रापत्यं गार्ग्यः । **गर्गादिभ्यो यञ्** (पा. ४. १. १०५) । [इति यञ् । तस्मात्] **शर्वदत्तः** शर्वेण दत्तः शर्व ईश्वरः । एतन्नामकादृषेः **उपजायत** सामवेदमध्यैष्ट । बाहुलकादडभावः ॥ २ ॥

---

2. S. °जगत्सं° for °जगतः सं°.

4. SPC. विश्रवसः for विश्रवणस्य; SPC. दिवादिभ्योऽण् for शिवा°.

7. शार्वदत्तो° *see* CN.

8. A. om. एवं परा°... उपक्रमते; BM. परंपरा° for परापर°.

10. BSPC. add अधीतवान् after अध्यैष्ट; S adds हि after ब्राह्मणानां; P. द्विजन्मद्वयेन for द्विजत्वं जन्मद्वयेन.

11. B. ऋतुर्मात्रा° for ऋतुमात्रा°.

13. BSPC. शर्वदत्ताद् गार्ग्याद् for शर्वदत्तो गार्ग्यः; A. अनुक्रामयेद् शर्वदत्तो गार्ग्यः रुद्रभूतेर्द्राह्यायणादुपजायत । रुद्रभूतिर्द्राह्यायणस्त्रात[ा]देषुमतादुप-जायत । एवं सर्वत्र योजनीयम् । नयन्नर्यम आरभ्य आ ब्रह्मणः अपरं वंशमनुक्रामेत् । for अनुक्रामेत् ... बाहुलकादडभावः ॥; वंशमा ब्रह्मणः *see* CN.

15. BS. शर्वदत्तः for शर्वः.

शर्वदत्तो गार्ग्यो रुद्रभूतेर्द्राह्यायणात् ॥ ३ ॥

गार्ग्यः शर्वदत्तोऽपि द्राह्यायणात् द्रहस्यापत्यात् । द्रहशब्दात् **गर्गादिभ्यः**° (पा. ४. १. १०५) इति यञि कृते **यञिञोश्च** (पा. ४. १. १०१) इति फक् । रुद्रभूतिनामकादृषेर्गार्ग्यः सामवेदमध्यैष्ट । एवं सर्वत्र योज-
5　नीयम् ॥ ३ ॥

रुद्रभूतिर्द्राह्यायणस्त्रातादैषुमात् ॥ ४ ॥

इषुमतो गोत्रापत्यात् **त्रातात्** एतन्नामकात् ॥ ४ ॥

त्रात ऐषुमतो निगडात् पार्णवल्केः ॥ ५ ॥

त्रातोऽपि **पार्णवल्केः** पर्णवल्कस्यापत्यात् । **बाह्वादिभ्यश्च** (पा. ४.
10　१. ९६) इति इञ्, निगडनामकात् ॥ ५ ॥

निगडः पार्णवल्किः गिरिशर्मणः काण्ठेविद्धेः ॥ ६ ॥

**दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम्** (पा. ४. १. ८१) इत्यपत्यार्थे इञन्तत्वेन निपातितः । कण्ठेविद्धस्यापत्यात् गिरिशर्म-नामकात् ॥ ६ ॥

15　गिरिशर्मा काण्ठेविद्धिर्ब्रह्मवृद्धेश्छन्दोगमाहकेः ॥ ७ ॥

---

1. C. द्राह्यायणेः for द्राह्यायणात्.

2. A. गर्गस्य (...) गोत्रापत्यं गार्ग्यः शर्वेण दत्तः शर्वदत्तः शर्व ईश्वरः for गार्ग्यः शर्वदत्तोऽपि. C. द्राह्यायणेः for द्राह्यायणात्; A. द्रुहस्य युवापत्यात्, BSP. द्रह्यस्या° for द्रहस्या°; A. द्रुह°, BSP. द्रह्य° for द्रह°.

4. A. वृद्धिः for फक्; A. साङ्गं for गार्ग्यः.

6. C. द्राह्यायणिः for द्राह्यायणः.

7. A. om. एतन्नामकात्.

8. A. निगलात् for निगडात्.

11. B. काण्डेविद्धेः, MMy. काण्डेवृद्धेः for काण्ठेविद्धेः.

13. A. adds आदिना after इति; तस्मात् for कण्ठेविद्धस्यापत्यात्.

15. B. काण्डे°, MMyA. काण्डेवृद्धिः for काण्ठेविद्धिः; BP. ब्रह्मविद्धेः for ब्रह्मवृद्धेः.

छन्दोगमाहकस्यापत्यं छन्दोगमाहकिः । संज्ञापूर्वकविधेरनित्यत्वाद्वृद्ध्य-भावः । ब्रह्मणा वेदेन वर्द्धेत इति ब्रह्मवृद्धिः । तस्माद् ब्रह्मवृद्धिनामकात् । क्तिच्क्तौ च संज्ञायाम् (पा. ३. ३. १७४) इति क्तिच् ॥ ७ ॥

**ब्रह्मवृद्धिश्छन्दोगमाहकिर्मित्रवर्चसः स्थैरकायनात् ॥ ८ ॥**

स्थिरकस्य युवापत्यात् । स्थिरकशब्दादिञन्ताद् यञिञोश्च (पा. ४. १. १०१) इति फक् । तस्मान्मित्रवर्चसो मित्रस्य वर्च इव वर्चो यस्य स मित्रवर्चास्तन्नामकात् ॥ ८ ॥ 5

**मित्रवर्चाः स्थैरकायनः सुप्रतीतादौलुन्द्यात् ॥ ९ ॥**

उलुन्दस्य गोत्रापत्यात् । उलुन्दशब्दाद् गोत्रापत्ये यञ् द्रष्टव्यः । तस्मात् सुप्रतीतात् । सुष्ठु प्रतीतो विख्यातः सुप्रतीतस्तन्नामकात् ॥ ९ ॥ 10

**सुप्रतीत औलुन्द्यो बृहस्पतिगुप्ताच्छायस्थेः ॥ १० ॥**

बृहस्पतिरिव विद्यया गुप्तस्तन्नामकात् ॥ १० ॥

**बृहस्पतिगुप्तः शायस्थिर्भवत्राताच्छायस्थेः ॥ ११ ॥**

शायस्थेर्भवेनेश्वरेण त्रातो रक्षितो भवत्रातस्तन्नामकात् ॥ ११ ॥ 14

---

1. °पूर्वको विधिरनित्य इति for °पूर्वकविधेरनित्यत्वत्.

2. P. सुवृद्धि° for ब्रह्मवृद्धि°.

4. BP. ब्रह्मविद्धि° for ब्रह्मवृद्धि°; A. स्थैलका° MMy. स्थैलङ्का, B. स्थैरङ्का° for स्थैरका°.

5. A. स्थिलक°, B. स्थिरङ्क° for स्थिरक°.

6. BA. यस्यासौ for यस्य सः.

8. A. स्थैलका°, MMy. स्थैलङ्का°, B. स्थैरङ्का° for स्थैरका°; PST. औलुण्ड्यात्, A¹My. औलिन्द्यात्, A. औलुमुन्द्यात्, M. औलन्द्यात् for औलुन्द्यात्.

9. PS. उलुण्ड°, A. उलुमन्द्य° for उलुन्द°.

10. PS. om. सुष्ठु प्रतीतो; SP. विख्याते, A. व्याख्यातः for विख्यातः.

11. PST. औलुण्ड्यो, A¹My. औलिन्द्यो, A. औलुमन्द्यो, M. औलन्द्यो for औलुन्द्यो.

**भवत्रातः शायस्थिः कुस्तुकाच्छार्कराक्ष्यात् ॥ १२ ॥**

**शार्कराक्ष्यात्** शर्कराक्षस्य गोत्रापत्यात् । **गर्गादिभ्यः** (पा. ४. १. १०५) इति यञ् । तस्मात् कुस्तुकनामकात् ॥ १२ ॥

**कुस्तुकः शार्कराक्ष्यः श्रवणदत्तात् कौहलात् ॥ १३ ॥**

5 **कौहलात्** कोहलस्यापत्यात् । **शिवादिभ्योऽण्** (पा. ४. १. ११२) इत्यण् । तस्माच्छ्रवणदत्तात्, श्रवणेन विद्यया दत्तं धनं यस्य तन्नामकात् ॥ १३ ॥

**श्रवणदत्तः कौहलः सुशारदाच्छालङ्कायनात् ॥ १४ ॥**

**शलङ्कस्य** गोत्रापत्यात् । शलङ्कु शलङ्कं चेति **नडादिषु** पाठात् 10 फक् । तत्संनियोगेनादेशश्च । तस्मात् **सुशारदात्** । शोभना शारदा यस्येति विग्रहस्तन्नामकात् ॥ १४ ॥

**सुशारदः शालङ्कायन ऊर्जयत औपमन्यवात् ॥ १५ ॥**

उपमन्योरपत्यादूर्जयतः विद्यातपोबलवत ऊर्जयन्नामकात् ॥ १५ ॥

**ऊर्जयन्नौपमन्यवो भानुमत औपमन्यवात् ॥ १६ ॥**

15 **औपमन्यवात् भानुमत**स्तेजस्विनस्तन्नामकात् ॥ १६ ॥

---

1. B. कस्तुका° for कुस्तुका°.

2. A. om. शार्कराक्ष्यात्.

4. B. कस्तुकः for कुस्तुकः.

8. P. शालकायनात् for शालङ्कायनात्.

9. BSPC. शलकोः for शलङ्कस्य; BPSC. शलकुः शलङ्कुः for शलङ्कु शलङ्कं.

10. A. शोभनं शारदो for शोभना शारदा; BPSC. add सुशारद इति after यस्येति.

12. P. शाल[illegible] for शालङ्कायन°.

**भानुमानौपमन्यव आनन्दजाच्चान्धनायनात् ॥ १७ ॥**

चान्धनायनात् चन्धनस्य युवापत्यात् । चन्धनशब्दादिञन्तात् **यञि-ञोश्च** (पा. ४.१.१०१) इति फक् । तस्माद् आनन्दं जनयतीति **आनन्दजः** तन्नामकात् ॥ १७ ॥

**आनन्दजश्चान्धनायनः शाम्बाच्छार्कराक्ष्यात् काम्बोजाच्चौप-मन्यवात् ॥ १८ ॥** 5

**शार्कराक्ष्यात्** शर्कराक्षस्य गोत्रापत्यात् शाम्बनामकादृषेः । **औपमन्यवा-**दुपमन्योरपत्यात् काम्बोजनामकादृषेश्चा**नन्दजो** विद्यात उपजायत ॥ १८ ॥

**शाम्बः शार्कराक्ष्यः काम्बोजश्चौपमन्यवो मद्रकाराच्छौ-ङ्गायनेः ॥ १९ ॥** 10

**शौङ्गायनेः** शौङ्गायनस्यापत्यात् । फगन्तादपत्यार्थ इञ् । तस्मान्मद्र-कारनामकादृषेस्तावुभावपि विद्यात उपाजनिषातामित्यर्थः ॥ १९ ॥

**मद्रकारः शौङ्गायनिः स्वातेरौष्ट्राक्षेः ॥ २० ॥**

**औष्ट्राक्षेः** उष्ट्राक्षस्यापत्यात् **स्वातेः** । स्वातिनक्षत्रे जातः स्वातिः । **श्रविष्ठाफल्गुन्यनुराधास्वाति**-(पा. ४.३.३४) इत्यादिना नक्षत्रादागतस्याणो लुक् । तस्मिन् कृते लुक् तद्धितलुकि (पा. १.२.४९) इति स्त्रीप्रत्ययस्यापि लुक् भवति । तन्नामकादृषेः ॥ २० ॥ 15 17

---

1. B. चाण्ड°, A. शाण्ड°, MyA[1]. शान्द°, M. शान्ध° for चान्ध°
2. B. चाण्ड°, A. शाण्ड° for चान्ध°; B. चण्ड°, A. शण्ड° for चन्ध°.
8. B. विरव्यातः for विद्यातः.
9. ST. मद्रगा° for मद्रका°.
12. A. उपजायेताम् for उपाजनिपाताम्.
14. A. नक्षत्रजातात् for °नक्षत्रे जातः.
15. P. नक्षत्रगंतस्य, BS. नक्षत्रस्यागतस्य, C. नक्षत्रामतस्य for नक्षत्रादागतस्य.

स्वातिरौष्ट्राक्षिः सुश्रवसो वार्षगण्यात् ॥ २१ ॥

**वार्षगण्यात्** वृषगणस्य गोत्रापत्यात् । वृषगणशब्दात् **गर्गादिभ्यो यञ्** (पा. ४. १. १०५) । तस्मात् **सुश्रवसः** सुष्ठु श्रवो यस्य तन्नामकात् ॥२१॥

सुश्रवा वार्षगण्यः प्रातरह्नात् कौहलात् ॥ २२ ॥

5 **कौहलात्** कोहलस्यापत्यात् **प्रातरह्नात्** प्रातरह्नि भवः **प्रातरह्नः** एतन्नामकादृषेः । **अह्नोऽह्न एतेभ्यः** (पा. ५. ४. ८८) इत्यव्ययात् उत्तरस्या-हन्शब्दस्याह्नादेशः ॥ २२ ॥

प्रातरह्नः कौहलः केतोर्वाद्यात ॥ २३ ॥

**वाद्यात्** वादस्य गोत्रापत्यात् **केतोः** तन्नामकात ॥ २३ ॥

10 केतुर्वाद्यो मित्रविन्दात् कौहलात् ॥ २४ ॥

**कौहलात् मित्रविन्दात्** मित्राणि विन्दतीति मित्रविन्दः तन्नामकात् । **गवादिषु विन्देः संज्ञायाम्** (वा. पा. ३. १. १३८) इति वार्तिककारवचना-न्मित्रोपपदाद्विन्देः शप्रत्ययः ॥ २४ ॥

मित्रविन्दः कौहलः सुनीथात् कापटवात् ॥ २५ ॥

15 **कापटवात्** कपटोरपत्यात् । शोभनवचनः सुनीथः । एतन्नामका-
16 दृषेः ॥ २५ ॥

---

5. A. अनुगेव for अह्नि भवः.

6. P. उक्तस्या°, S. उक्तस्याह्नशब्दस्याहनादेशः, A. उत्तरस्याह्न-शब्दस्या ... for उत्तरस्या ....

8, 9. BPSTC. वाज्यात् for वाद्यात्.

9. CPSTC. वाजस्य for वादस्य.

10. BPSTC. वाज्यः for वाद्यः.

14. C. सुनीघात् for सुनीथात्; S. कापठवात् for कापटवात्.

सुनीथः कापटवः सुतेमनसः शाण्डिल्यायनात् ॥ २६ ॥

**शाण्डिल्यायनात्** शण्डिलस्य गोत्रापत्यं शाण्डिल्यः । तस्यापत्यात् । गर्गादिपाठाद्यञ् । तदन्तात् फक् । तस्मात् **सुतेमनसः** सुते अभिषुते सोमे मनो यस्य सः सुतेमनाः तन्नामकात् । **हलदन्तात् सप्तम्याः संज्ञायाम्** (पा. ६. ३. ९) इत्यलुक् ॥ २६ ॥ 5

सुतेमनाः शाण्डिल्यायनोऽंशोर्धानंजय्यात् ॥ २७ ॥

**धानंजय्याद्** धनंजयस्य गोत्रापत्यात् । गर्गादिषु पाठाद्यञ् । तस्मादंशो-स्तन्नामकात् **सुतेमनाः** अध्यैष्ट ॥ २७ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे
वंशब्राह्मणे प्रथमः खण्डः ॥ १ ॥ 10

---

2. शण्डिलस्य *see* CN.

6. BPSA. add अंशुर्धानंजय्यः after °जय्यात् *see* CN.

8. BPSA. add अंशुर्धानंजय्य इत्युत्तरखण्डशेषोऽयम् after अध्यैष्ट ॥ *see* CN.

9. BP. om. सायणा° °प्रकाशे; A. has olny प्रथमः खण्डः.

## द्वितीयः खण्डः

अंशुर्धानंजय्योऽमवास्याच्छाण्डिल्यायनाद्राधाच्च गौतमात् ॥

**धानंजय्योंऽशुः शाण्डिल्यायनाद्** । अमावास्यायां जातः अमावास्यः । **अमावास्यया वा** (पा. ४.३.३०) इति अकारप्रत्ययः । तन्नामकादृषेर्**गौतमात्** गोतमस्य गोत्रापत्यात् **राधात्** एतन्नामकादृषेश्च विद्यात उपजायत ॥ १ ॥

राधो गौतमो गातुर्गौतमात् पितुः ॥ २ ॥

**गौतमो राधो गौतमाद् गातुः** सामगानशीलाद् एतन्नामकात् **पितुः** अध्यैष्ट ॥ २ ॥

गाता गौतमः संवर्गजितो लामकायनात् ॥ ३ ॥

**लामकायनात्** लामकस्य युवापत्यात् **संवर्गजि**न्नामकादृषेः ॥ ३ ॥

संवर्गजिल्लामकायनः शाकदासात् भाडितायनात् ॥ ४ ॥

भडितस्यापत्यं भाडितिः तस्यापत्यं भाडितायनः तस्मात् । शक्यते समाधिनावगन्तुमिति शाक ईश्वरः । तस्य दासः शाकदासः । तन्नामकात् ॥ ४ ॥

शाकदासो भाडितायनो विचक्षणात्ताण्ड्यात् ॥ ५ ॥

तण्डस्य गोत्रापत्यात् । गर्गादित्वाद्यञ् । तस्माद् **विचक्षणनामकात्** ॥ ५ ॥

---

5. A. अपत्यात् for गोत्रापत्यात्.

8. C. adds गातुः गोतमगोत्रापत्यात् after एतन्नामकात्.

11. BA. लमकस्य for लामकस्य.

13. C. शाकदासो भाडितायनः for शक्यते° °मिति.

16. C. adds विचक्षणस्य after तण्डस्य.

**विचक्षणस्ताण्ड्यो गर्दभीमुखाच्छाण्डिल्यायनात् ॥ ६ ॥**

शाण्डिल्यस्यापत्यात् गर्दभीमुखनामकात् ॥ ६ ॥

**गर्दभीमुखः शाण्डिल्यायनः उदरशाण्डिल्यात् पितुः ॥७॥**

सोऽपि **उदरशाण्डिल्यात्**। उदरशब्देन संततिर्लक्ष्यते । बहुसंतानतः **शाण्डिल्यात् पितुरे**वाध्यैष्ट ॥ ७ ॥

**उदरशाण्डिल्योऽतिधन्वनश्च शौनकान्मशकाच्च गार्ग्यात्॥**

**उदरशाण्डिल्योऽपि शौनकात्** शुनकनामकस्य ऋषेर्गोत्रापत्यात् । [**अनृष्यानन्तर्ये बिदादिभ्योऽञ्** (पा. ४.१.१०४) इति] शुनकादञ्। तस्मादतिधन्वनः। धनुरित्यायुधमात्रस्य उपलक्षणम् । तदतिक्रान्तं येन तन्नामकात्। बहुव्रीहौ **धनुषश्च** (पा. ५.४.१३२) इत्यनङ् । **गार्ग्यात्** गर्गस्य गोत्रापत्यात् **मशकाच्च** विद्यात उपजायत । उभयत्रापि चकार इतरेतरसमुच्चयार्थः ॥ ८ ॥

**मशको गार्ग्यः स्थिरकात् गार्ग्यात् पितुः ॥ ९ ॥**

**गार्ग्यो मशकस्तु गार्ग्यात्** स्थिरकनामकात् पितुरेवाध्यैष्ट ॥ ९ ॥

**स्थिरको गार्ग्यो वासिष्ठाच्चैकितानेयात् ॥ १० ॥**

**वासिष्ठात्** वसिष्ठस्यापत्यात् **चैकितानेयात्** एतन्नामकात् ॥ १० ॥

---

4. C. शाण्डिल्यायनः उदरशाण्डिल्यात् for उदरशाण्डिल्यात्.

6. B. °धनुनः for °धन्वनः; MYA[1]. add अतिधन्वा शौनकः before मशकात्.

8. अनृष्या° *see* CN.

9. C. om. आयुधमात्रस्य.

11. A. तदुभयत्रापि चकारोऽनुक्तसमु° for उभयत्रा°... .

13. C. adds अतिधन्वा शौनको before मशको and च after मशकः.

15. MMy चैक° for चैकि°.

**वासिष्ठश्चैकितानेयो वासिष्ठादारेहण्याद्राजन्यात् ॥ ११ ॥**

वासिष्ठात् वसिष्ठस्यापत्याद् आरेहण्यनामकाद्राजन्याद्दृषेः । मुख्यस्य राजन्यस्याध्यापनेऽधिकारासंभवात् ॥ ११ ॥

**वासिष्ठ आरेहण्यो राजन्यः सुमन्त्रात् बाभ्रवात् गौतमात् ॥ १२ ॥**

**गौतमात्** गोतमसंबन्धिनः । **तस्येदम्** (पा. ४.३.१२०) इत्यण् । **बाभ्रवात्** बभ्रोरपत्यात् सुमन्त्रनामकादृषेः ॥ १२ ॥

**सुमन्त्रो बाभ्रवो गौतमः शूषाद्वाह्नेयाद्भारद्वाजात् ॥ १३ ॥**

**भारद्वाजात्** भरद्वाजसंबन्धिनो **वाह्नेयात्** वह्नेरपत्यात् । **इतश्चानिञः** (पा. ४.१.१२२) इति ढक् । तस्मात् शूषनामकात् ॥ १३ ॥

**शूषो वाह्नेयो भारद्वाजोऽरालाद्दार्तेयाच्छौनकात् ॥ १४ ॥**

**शौनकात्** शुनकसंबन्धिनो **दार्तेयाद्** दृतेरपत्याद् अरालनामकात ॥ १४ ॥

**अरालो दार्तेयः शौनको दृतेरैन्द्रोताच्छौनकात् पितुः ॥ १५ ॥**

**शौनकादैन्द्रोतात्** इन्द्रोतस्यापत्यात् **दृतेः** एतन्नामकात् **पितुः** एव ॥ १५ ॥

---

1.2. SP. आरै for आरे.

3. C. राजन्यऋषेः for राजन्यस्य ; C. °कारसंभवात् for कारा°...

4. S. सुमन्तात् for सुमन्त्रात्.

7. S. सुमन्त for सुमन्त्र .

11.14. MMyA. दराल for अराल .

12. S. om. शौनकात् ... अरालनामकात् ; A. शौनकनामकात् for शौनकात्.

15. MMyA. [illegible] for ऐन्द्रोतात्.

**इतिरैन्द्रोतः शौनक इन्द्रोताच्छौनकात् पितुरेव ॥ १६ ॥**

**शौनकात्** शुनकगोत्रापत्यात् **इन्द्रोतात्** तन्नामकात् **पितुरेव** अध्यैष्ट ॥ १६ ॥

**इन्द्रोतः शौनको वृषशुष्माद्वातावतात् ॥ १७ ॥**

**वातावतात्** वातावतस्यापत्यात् वृषशुष्मनामकात् ॥ १७ ॥ 5

**वृषशुष्मो वातावतो निकोथकात् भायजात्यात् ॥ १८ ॥**

भयजातस्य गोत्रापत्यात् निकोथकनामकात् ॥ १८ ॥

**निकोथको भायजात्यः प्रतिथेर्देवतरथात् ॥ १९ ॥**

**देवतरथात्** देवान् यज्ञेन तरतीति देवतरथस्तस्यापत्यात् **प्रतिथेः** प्रकृष्टास्तिथयो यस्य । सर्वर्तुषु यागादिपुण्यकर्मेत्यर्थः । तन्नामकात् ॥ १९ ॥ 10

**प्रतिथिर्देवतरथो देवतरसः शावसायनात् पितुः ॥ २० ॥**

**शावसायनात्** शवसोऽपत्याद् **देवतरसः** एतन्नामकात् **पितुः** एव ॥ २० ॥ 13

---

1. BT. इन्द्रोतः, My. इन्द्रोदः, M. ऐन्द्रादः for ऐन्द्रोतः; MMyA. इन्द्रोदात् for इन्द्रोतात्.

2. B. °गोत्रस्य for °गोत्र°.

4. MMyA. इन्द्रोदः for इन्द्रोतः; BPS. °शूष्णा°, TC. °शुष्णा° for °शुष्मा°.

5. A. om. वातावतात्; BPS. °शूष्ण°, TC. शुष्ण° for °शुष्म°.

6, 7, 8. (825) A. निगोधक° for निकोथक°.

7. A. भयजातेरपत्यात् for भयजातस्य गोत्रापत्यात्.

9. MMyA. देवतरसात्, B. दैवतरथात् for देवतरथात्; A. यज्ञेनेति देवतराः for यज्ञेन ... °रथः.

10. S. °कर्मणे for °कर्मे°.

11. C. om. पितुः; MMyA. देवतरसो, B. दैवतरथो for देवतरथो.

**देवतराः शावसायनः शवसः पितुरेव ॥ २१ ॥**

सोऽपि **शवसः** तन्नामकात् **पितुरेव** अधीतवान् ॥ २१ ॥

**शवा अग्निभुवः काश्यपात् ॥ २२ ॥**

**काश्यपात्** कश्यपगोत्रोत्पन्नाद् **अग्निभुवः** अग्नेर्भवतीति अग्निभूः तन्नामकात् **शवा** विद्यात उपजायत ॥ २२ ॥ 5

**अग्निभूः काश्यप इन्द्रभुवः काश्यपात् ॥ २३ ॥**

इन्द्रात् भवतीति इन्द्रभूः तन्नामकात् ॥ २३ ॥

**इन्द्रभूः काश्यपो मित्रभुवः काश्यपात् ॥ २४ ॥**

मित्रात् सूर्यात् भवतीति मित्रभूः तन्नामकात् ॥ २४ ॥

10 **मित्रभूः काश्यपो विभण्डकात् काश्यपात् पितुः ॥ २५ ॥**

कश्यपगोत्रापत्याद्विभण्डकादेतन्नामकात् पितुरेव ॥ २५ ॥

**विभण्डकः काश्यप ऋष्यशृङ्गात् काश्यपात् पितुः ॥ २६ ॥**

**काश्यपात्** कश्यपापत्याद् ऋष्यशृङ्गनामकादृषेः **पितुः** एव **विभण्डकः** अधीतवान् ॥ २६ ॥

15 **ऋष्यशृङ्गः काश्यपः कश्यपात् पितुरेव ॥ २७ ॥**

सोऽपि **कश्यपात्पितुरेव** अध्यैष्ट ॥ २७ ॥

**कश्यपोऽग्नेः ॥ २८ ॥**

18 **कश्यपोऽग्नेः** देवताया विद्यात उपजायत ॥ २८ ॥

---

5. BS. शवः, P. शवोऽत for शवाः.

11. BS. काश्यप° for कश्यप°; PS. add अपि after °पत्याद्.

12,13,15, BMA. ऋश्य° for ऋष्य°.

16. A. adds काश्यपः after सोऽपि; A. कश्यपनामकात् for कश्यपात्.

अग्निरिन्द्रात् ॥ २९ ॥

अग्निश्चेन्द्राद्देवात् ॥ २९ ॥

इन्द्रो वायोः ॥ ३० ॥

वायोः सर्वजगत्प्राणात्मकाद् इन्द्रः अधीतवान् ॥ ३० ॥

वायुर्मृत्योः ॥ ३१ ॥ 5

वायुर्मृत्योः देवात् ॥ ३१ ॥

मृत्युः प्रजापतेः ॥ ३२ ॥

सोऽपि प्रजापतेः चराचरात्मकस्य जगतः स्रष्टुः ॥ ३२ ॥

प्रजापतिर्ब्रह्मणः ॥ ३३ ॥

प्रजापतिर्ब्रह्मणः महतः स्वयंभुवः सकाशात् साङ्गं सामवेदमधीत- 10
वान् ॥ ३३ ॥

ब्रह्मा स्वयंभूः ॥ ३४ ॥

स तु स्वयंप्रभातविद्यत्वान्नान्यस्माद्ध्यैष्टेत्यर्थः ॥ ३४ ॥

तस्मै नमस्तस्मै नमः ॥ ३५ ॥ 14

---

4. A. °प्राणात्मकत्वाद् for °प्राणात्मकात्.

10. PBA. om. प्रजापतिर्.

13. A. adds ब्रह्मा after तु; S. °भातो विद्यावान् for °भातविद्यत्वात्.

14. C. om. तस्मै नमस्तस्मै नमः; BP. तेभ्यः for second तस्मै.

एवंविद्यासंप्रदायप्रवर्तकानृषीन् देवांश्च दर्शयित्वा इदानीमन्तेऽपि परापरगुरुनमस्कारः कर्तव्य इत्यभिप्रायेण तन्नमस्कारं दर्शयति -- **तस्मै नमस्तस्मै नमः** इति। तस्मै स्वयंभुवे ब्रह्मणे **नमः** ॥ अभ्यास आदरार्थः ॥ ३५ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे
5　वंशब्राह्मणभाष्ये द्वितीयः खण्डः ॥ २ ॥

---

1. A. देवान् ऋषींश्च for ऋषीन् देवांश्च.

2. C. परंपरा for परापर°; SP. नमस्कारं for नमस्कारः and om. कर्तव्य° ... तन्नमस्कारं.

3. BPC. तेभ्यो° for second तस्मै; BPSC. add तेभ्यः पूर्वोक्तेभ्यो नमः ॥ after ब्रह्मणे नमः ॥; SP. om. अभ्यास आदरार्थः; A. द्विरुक्तिरादरार्था for अभ्यासः ... .

4. PBA. om. इति सायणा° ... खण्डः.

# तृतीयः खण्डः

**आचार्येभ्यो नमस्कृत्वा[अ]थ वंशस्य कीर्तयेत् ।
स्वधा पूर्वेषां भवति नेतायुर्दीर्घमश्नुते ॥ इत्युक्त्वानुक्रामे-
द्वंशमा ब्रह्मणः ॥ १ ॥**

एवं सामवेदसंप्रदायवंशप्रवर्त (र्ति?) काम् एकाम् ऋषिपरंपरां दर्शयित्वा परामपि दर्शयितुं तत्कीर्तने किंचिन्नियमं दर्शयति — **आचार्येभ्यः** इति । **अथ** यथोक्तवंशकीर्तनानन्तरं **वंशस्य** अन्यस्य ऋषीन् **कीर्तयेत्** । **आचार्येभ्यः** ब्रह्मादिभ्यः **नमस्कृत्वा** । **पूर्वेषां** पित्रादिभ्यः । चतुर्थ्यर्थे षष्ठी । **स्वधा** कव्यं दत्तं भवति । **नेता** संप्रदायप्रवर्तक एतत्संज्ञक ऋषि**र्दीर्घमायुरश्नुते** इत्येतन्मन्त्रमुक्त्वा **आ ब्रह्मणः** ब्रह्मपर्यन्तं **वंशमनुक्रामेत्** कीर्तयेत् ॥ १ ॥

**नयन्नर्यमभूतेः कालबवात् ॥ २ ॥**

यदर्थं नियमो दर्शितस्तं वक्तुमुपक्रमते — **नयन्नर्यमभूते**रिति । सामसंप्रदायप्रवर्तको **नयन्नाम** ऋषिः **कालबवात्** कल्बस्यापत्यात् **अर्यमभूतेः** अर्यम्णो भूतिरिव भूतिर्यस्य तन्नामकादृषेर्विद्यात उपजायतेति शेषः ॥ २ ॥

**अर्यमभूतिः कालबवः भद्रशर्मणः कौशिकात् ॥ ३ ॥**

सोऽपि **कौशिकात्** कुशिकस्यापत्यात् **भद्रशर्मणः** भद्रं कल्याणं शर्म स्थानं यस्य तन्नामकात् ॥ ३ ॥

---

2. A. वंशनामकीर्तनानन्तरं वं (   ) ति पूर्वोक्तमाचार्यादिनमस्कारं विवृणोति–आचार्येभ्यो नमस्कृत्या. with this introductory sentence the ms. abruptly ends here ; BM. कीर्तये for कीर्तयेत्.

6. B. om. किंचिन्.

7. C. ऋषिकीर्तनाय for ऋषीन् कीर्तयेत्.

9. C. adds भवतु after भवति.

10. B. एतं for एतत्.

**भद्रशर्मा कौशिकः पुष्पयशस औदव्रजेः ॥ ४ ॥**

**औदव्रजेः** उदव्रजस्यापत्यात् **बाह्वादिभ्यश्च** (पा. ४.१.९६) इति इञ्। पुष्पस्य यश इव यशो यस्य। तन्नामकात् ॥ ४ ॥

**पुष्पयशा औदव्रजिः संकराद्गौतमात् ॥ ५ ॥**

5 **गौतमात्** गोतमस्यापत्यात् **संकरात्** संकरनामकात् ॥ ५ ॥

**संकरो गौतमोऽर्यमराधाच्च गोभिलात् पूषमित्राच्च गोभिलात् ॥ ६ ॥**

**गोभिलात्** गोभिलापत्यात् **अर्यमराधात्** अर्यम्णः संजातो राधः सिद्धिर्यस्य तन्नामकात् **गोभिलात् पूषमित्रात्** पूषा देवो मित्रं यस्य तन्नामका-

10 दृषेश्च विद्यात उपजायत ॥ ६ ॥

**पूषमित्रो गोभिलोऽश्वमित्राद्गोभिलात् ॥ ७ ॥**

**गोभिलात्** अश्वमित्रनामकादृषेः **पूषमित्रो**ऽध्यैष्ट ॥ ७ ॥

**अश्वमित्रो गोभिलो वरुणमित्राद्गोभिलात् ॥ ८ ॥**

14 **वरुणो मित्रो यस्य तन्नाम्नः** ॥ ८ ॥

---

1,2. MMyBAC. औदु° for औद°.

6. S. गौतमात् for गोभिलात्; MMyA[1]. add अर्यमराधो गोभिलः after गोभिलात् and om. च from °मित्राच्च.

8. S. अर्यमसंज्ञातः for अर्यम्णः संजातः.

11. C. adds अर्यमराधो गोभिलश्च before पूष°; C. adds च after °मित्रः.

12. C. adds अर्यमराधश्च गोभिलः after ऋषेः; C. adds च after °मित्रः.

13. MMyA[1]. वत्स° for वरुण°.

14. C. तन्नामकात् for तन्नाम्नः.

वरुणमित्रो गोभिलो मूलमित्राद्गोभिलात् ॥ ९ ॥

मूलमित्रनामकात् ॥ ९ ॥

मूलमित्रो गोभिलो वत्समित्राद् गोभिलात् ॥ १० ॥

गोभिलसंबन्धिनो वत्समित्रात् वत्सो नाम ऋषिर्मित्रं यस्य तस्मात् ॥१०॥

वत्समित्रो गोभिलो गौल्गुलवीपुत्राद्गोभिलात् ॥ ११ ॥ 5

गुल्गुलोरपत्यं स्त्री गौल्गुलवी तस्याः पुत्रात् गोभिलात् ॥ ११ ॥

गौल्गुलवीपुत्रो गोभिलो बृहद्वसोः पितुः ॥ १२ ॥

स तु बृहद्वसोः बृहद् वसु यस्य तन्नामकात् पितुरेवाधीष्ट ॥ १२ ॥

बृहद्वसुर्गोभिलो गोभिलादेव ॥ १३ ॥

गोभिलो गोभिलस्यापत्यं बृहद्वसोर्गोभिलादेव अधीतवान् । न त्वन्यस्मात् ॥ १३ ॥ 10

गोभिलो राधाच्च गौतमात् ॥ १४ ॥

गोभिलोऽपि गोतमस्यापत्याद्राधादेतन्नामकाद्दषेर्विख्यातः समजनि ॥ १४ ॥

समानं परं समानं परम् ॥ १५ ॥

एवं विलक्षणां वंशपरंपरां दर्शयित्वा राधाद् गौतमादारभ्य वंशः समान इत्याह — समानं परमिति । परम् अवशिष्टं राधादिब्रह्मपर्यन्तम् ऋषिजातं समानम् । अभ्यास आदरार्थो ब्राह्मणसमाप्त्यर्थश्च ॥ १५ ॥ 15

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे
वंशब्राह्मणभाष्ये तृतीयः खण्डः ॥ ३ ॥

॥ वंशब्राह्मणभाष्यं समाप्तम् ॥ 20

ॐ

1. MMyA[1]. वरुण° for मूल°.
5. MMyA[1]. मूल° for वत्स°; MMyA[1]. गोर्मुलवी° for गौल्गुलवी°.
9. C. om. गोभिलः.
10. S. om. गोभिलो° ... °नत्वन्यस्मात्.
13. B. विख्यातः for विद्यातः.

## CRITICAL NOTES.

P. 9. L. 7.

The printed editions P and S as also the manuscripts we consulted read: " उपजायत शर्वदत्ताद् गार्ग्याच्छर्वदत्तो गार्ग्यो रुद्रभूतेर्द्राह्यायणात्." Here शर्वदत्त: गार्ग्य: should, as it occurs only once, serve as a subject in the preceding as well as in the following sentences. But it appears curious that the very sentence which introduces the long list of names of ṛṣis should seek its subject, kartṛ-pada, from the following sentence or following sentence should borrow it from the preceding. The later course is, of course, not unusual. But the style of this brāhmaṇa does not warrant such assumption as nowhere else is in it a tendency for economy of expression displayed. A simple glance at the successive chain of sentences will prove our contention. The only word, that is commonly inherited by all the succeeding sentences, is उपजायत, the predicate. The order of names of teachers and the taught, monotonously always followed throughout, is this: the name of the disciple in the nominative stands first and that of the preceptor in oblative forms second. The *guru* of the preceding sentence assumes *śiṣyahood* in the next, making, of course, necessary changes in the case endings as warranted, from oblative to nominative. In this way a long line of ṛṣis,–śiṣyas and gurus–is registered in this brāhmaṇa, the ṛṣis, through whom the eternal knowledge, the Vedas, is said to have been handed down. Therefore, it is plain that the commencing, as also the following sentences should have, independent of each other, names of the preceptor as also of the disciple without exception. For this reason we assume that the original text might have commenced as:—

उपजायत शर्वदत्ताद् गार्ग्याच्छर्वदत्तो गार्ग्यः ॥ १ ॥
शर्वदत्तो गार्ग्यो रुद्रभूतेर्द्राह्यायणात् ॥ २ ॥

In the very first sentence, strangely enough, शर्वदत्त गार्ग्य constituted the names of the preceptor as also of the disciple. Confused by this strange coincidence of identity of

names of the teacher and the taught the innocent scribes must have left out शर्वदत्त: गार्ग्य: from the commencing sentence thinking that this formed part, i.e., subject, of the following sentence, as the style of the brāhmaṇa warrants, and that the repetition of these words might have crept in the text owing to the *mistakes* of the less wise previous generations of his tribe ! This may be the reason why we do not find शर्वदत्तो गार्ग्य: in any of the Mss. twice.

It is likely that the original reading might have been as: " उपजायत शर्वदत्ताद् गार्ग्याच्छार्वदत्तो गार्ग्य: ". For, according to grammatical rule a student of शर्वदत्त, should be addressed as शार्वदत्त ("शिवादिभ्योऽण् Pan. IV 1.112). The scribes might have wrongly copied this by dropping दीर्घ from शार्वदत्त which later, in face of शर्वदत्तो गार्ग्य: of the succeeding sentence completely disappeared along with its qualifying word गार्ग्य: from the text for obvious reason.

The Ms. A of Adyar Library (shelf No. 20 M. 26. 71740) quotes the first sentence in full as "शर्वदत्ताद् गार्ग्याच्छर्वदत्तो गार्ग्य इत्यारभ्य" which clearly supports our presumption that शर्वदत्त: गार्ग्य: was dropped from the first sentence by the innocent scribes.

P. 9. L. 13.

All the manuscripts and P read आ ब्रह्मणो वंशमनुक्रामेत्. This refers to the last sentence of the *sūtra* 3.1 which reads अनुक्रामेद्वंशमा ब्रह्मण:. We have, therefore, rearranged the words as found in the *sūtra*.

P. 15. L. 2.

BPS. शाण्डिल्यस्य गोत्रापत्यं शाण्डिल्य:, तस्यापत्यात्. A is blank upto शाण्डिल्य: and in place of तस्यापत्यात् it reads गोत्रापत्यात्. The descendant or progeny of शाण्डिल्य, according to grammar, should be called शाण्डिल्यायन (यञिञोश्च. पा. IV. 1. 101) and not शाण्डिल्य, and शाण्डिल्य can be, at the most, the progeny or descendant of शण्डिल alone (गर्गादिभ्यो यञ् (पा. IV.1.105). Therefore, the explanation: "शाण्डिल्यस्य ... शाण्डिल्य:", given in BPS is obviously incorrect. We have therefore, corrected it as:— "शण्डिलस्य गोत्रापत्यं शाण्डिल्य:. The Ms. C. from Madras reads शण्डिलस्य only.

P. 15. L. 8.

BPSA adds अंशुर्धानंजय्य: after धानंजय्यात् and says in the commentary that it is the continuation of the next khaṇḍa (उत्तरखण्ड-शेषोऽयम्). We have, however, taken this to the next khanda, because this forms the beginning of the first *sūtra*, in that khanda.

P. 17. L. 8.

All the Mss. except A have शुनकादिभ्योऽञ् and SP has शौनकादिभ्योऽञ् while A reads षिदादिभ्योऽञ् (ङ् ?) in place of शुनकादिभ्योऽञ्. Now there is no शुनकादिगण in *gaṇapāṭha* nor a *sūtra* as शुनकादिभ्योऽञ् or शौनकादिभ्योऽञ्. The *sūtra* षिदादिभ्योऽङ् (पा. III.3.104) deals with primary suffix and hence is not applicable in the present context. The commentator, while explaining शौनकात् gives its derivation as from शुनक with अञ् suffix. The *Pāṇini sūtra* which prescribes this suffix for the word शुनक is अनृष्यानन्तर्ये बिदादिभ्योऽञ् (IV. 1. 104). Here in the बिदादिगण the word शुनक is counted. We have, therefore, added the *sūtra* in square brackets and corrected शुनकादिभ्योऽञ् as शुनकादञ्.

---

ॐ

## APPENDIX A.

### सामतर्पणम्

(*Sāma-tarpaṇa* is included in many of the southern mss as the first *paṭala* of the *Vaṁśa-brāhmaṇa*. This must have been done by the priests who were the adherents of the *Sāma-Veda* for their reference. Since the *Sāma-tarpaṇa* has formed the introductory part of the *Vaṁśa-brāhmaṇa* in the old mass we have printed this as an Appendix though strictly speaking it has no place here.)

देवान् यथापूर्वं तर्पयिष्यामः। अग्निस्तृप्यतु ब्रह्मा सोमः शिवः प्रजापतिः सवितेन्द्रो बृहस्पतिस्त्वष्टा विष्णुर्यमो वायुरादित्यश्चन्द्रमा नक्षत्राणि सह देवताभिर्वसवो रुद्रा आदित्या भृगवोऽङ्गिरसः साध्या मरुतो विश्वेदेवाः सर्वे देवा वाक् च साध्याश्चापश्चौषधयश्चेन्द्राग्नी धातार्यमा सार्धमासर्तवो दितिरदितिरिन्द्राण्युमा श्रीः सर्वाश्च देवपत्न्यो रुद्र[ाः] स्कन्दविशाखौ विश्वकर्मा दर्शश्च पौर्णमासश्च चातुर्वेद्यं चातुर्होत्रं वैहारिकाः पाकयज्ञाः स्थावरजङ्गमे पर्वताशिषो भव्यो (पर्वता अशेषा भव्याः?) नद्यः समुद्रोऽपांपतिः यजमाना ये देवास्त्वेकादशकास्त्रयश्च, त्रिंशच्च त्रयश्च, त्रीणि च शतास्त्रयश्च त्रीणि च सहस्राः ॥ १ ॥

द्विपविव्या देवास्तृप्यन्ताम्। एकपविव्या देवा मनुष्यप्रभृतयस्तृप्यन्ताम्। संकर्षण-वासुदेवौ धन्वन्तरिः साधुकार उदरवैश्रवणपूर्णभद्रमाणिभद्राः यातुधाना रक्षांसीतरगणास्त्रैगुण्यं

9. M. om, देवान् ... तर्पयिष्यामः; M. om. शिवः.

10. M. अर्यमा for यमः.

12. A. °मासऋतवो° for °मासर्तवो°,

13. A. पूर्ण° for पौर्ण; A. om. चातुर्वेद्यं; m. वहानिकाः for वैहारिकाः; M. पर्वाताशिषः for पर्वता°.

15. m. शतसहस्राः for सहस्राः.

16. m. संकर्षणः वासुदेवः for संकर्षणवासुदेवौ.

17. M. पूर्णभद्रा माणिभद्रः, m. उदरवैश्रवणः पूर्णभद्राः माणिभाद्रः for °पूर्णभद्र ....

नामाख्यातोपसर्गनिपाता देवऋषयो महाव्याहृतयः सावित्री ऋचो यजूंषि सामानि काण्डा-न्येषां दैवतानि प्रायश्चित्तानि शुक्रियोपनिषदः शौकी शुकः शाकल्यः पाञ्चाल ऋषिः ऋचाभिः व्यासः पाराशर्यः तण्डी कुकी कौशिकी बडवा प्रातिथेयी मैत्रायणी दाक्षायणी सर्वाचार्याः कुलाचार्या गुरुकुलवासिनः कन्या ब्रह्मचारी आत्मार्थी याज्ञवल्क्यः ॥ २ ॥

पितृणां पितामहानां प्रपितामहानां मातृणां मातामहानां प्रमातामहानाम् आचार्याणां प्राचार्याणां संहिताकारपदकारसूत्रकारब्राह्मणकाराणां ब्राह्मणानामनपत्यानां ब्राह्मणीनामेक-पत्नीनामनपत्यानां सर्वेषां च ब्रह्मचारिणां सर्वेषां च ब्रह्मचारिणाम् ॥ ३ ॥

राणायनसात्यमुग्र्यिव्यासा भागुरिरौलुण्डी गौल्गुलविर्भानुमानौपमन्यवो दाराल्रो गार्ग्यः सावर्णिः वार्षगण्यश्च ते दश । कुथुमिश्च शालिहोत्रश्च जैमिनिश्च त्रयोदश । इत्येते साम-गाचार्याः स्वस्ति कुर्वन्तु तर्पिताः । स्वस्ति कुर्वन्तु तर्पिताः ॥ ४ ॥

शटि – बाल्ल[ब] वि – कालबवि – ताण्ड्याश्च वृषाणकश्च रुरुकिश्च शमबाहुरगस्त्यो बष्कशिराश्च हूहूश्च दश । इत्येते प्रवचनकर्तारः स्वस्ति कुर्वन्तु तर्पिताः । स्वस्ति कुर्वन्तु तर्पिताः ॥ ५ ॥

---

1. M. सावित्रं for सावित्री.

2. M. शोकीः, m. शोकी for शौकी; Mm. om. ऋषिः.

3. m. बलबा for बडवा.

5. In actual practice this paragraph comes at the end.

6. m. संहिताकाराणां पदकाराणां सूत्रकाराणां ब्राह्मणकाराणां for संहिताकार° ...

7. M. does not repeat सर्वेषां च ब्रह्मचारिणां.

8. A. राणायनी सात्यमुग्री दुर्वासाः, M. राणायनशाट्यमुग्रचव्यासा for राणायनः ...; MA भागुरिर्गौरुण्डी for भागुरिरौलुण्डी; MA. गौर्गुलवी for गौल्गुलविः; Am. भगवान् for भानुमान्.

9. A. वार्षगव्यश्च for वार्षगण्यश्च; A. कुथुमः for कुथुमिः.

11. AMm. °श्चात्राष्टममाहुरगस्त्यो (M. °स्त्यं) for °श्च शम° ... ,

12. AM. बट्कशिलाश्च, m. बट् च कशिराश्च for बष्कशिराश्च; MAm. कुहूश्च for हूहूश्च.

अग्निस्तृप्यतु। ब्रह्मा देवा वेदा ओंकारः सावित्री यज्ञा द्यावापृथिव्यहोरात्राणि संख्याः समुद्राः क्षेत्रौषधिवनस्पतयो गन्धर्वाप्सरसो नागा यक्षा रक्षांसि भूताश्चैवानुमन्यन्ताम्। सुमन्तुजैमिनिविश्वामित्रवसिष्ठपराशरजालन्तुबाह्वगौतमशाकल्यबाभ्रव्यमाण्डव्य [1] बडवा प्रातिथेयी चान्ये आचार्यास्तेभ्यश्च स्वधेति। तेभ्यश्च स्वधेति ॥ ६ ॥

## प्रथमः पटलः

—

ॐ

1. M. °पृथिव्यावहो° for °पृथिव्यहो°.

3. A. ऋषिसमन्तुः for सुमन्तु°; m. समन्तुर्जैमिनिर्विश्वामित्रो वसिष्टः पाराशरो जालन्तुः बाह्वो गौतमः शाकल्यो बाभ्रव्यः माण्डव्यः for सुमन्तु ... माण्डव्याः.

# INDEX